श्रीरामायनमः

श्रीमत्कौशिककुलजलधिकौस्तुभस्य
श्रीमदनन्तनारायणशर्मणस्तनयेन
श्रीपार्वतीगर्भशुक्तिमुक्ताफलेन
श्वेतारण्यनारायणयज्वना रचिताः

श्रीचन्द्रशेखरेन्द्रसरस्वतीजगद्गुरुस्तव कल्पकवल्लीकपालीश्वर-
स्तुतिप्रमुखाः लक्ष्मीनक्षत्रमालान्ताः एकोनत्रिंशत् ग्रन्थाः
शिवतत्वसुधानिधिपुराणोक्तशिवार्चनप्रकरणस्थशिवस्तुतिश्च
श्रीकामकोटिपीठाधिपैः श्रीचन्द्रशेखरेन्द्रसरस्वतीजगद्गुरुभिः

वीक्षिताश्चानुमोदिताश्च
चेन्नपुरीविराजमाने
प्रोग्रसीव
भिधाने मुद्रायन्त्रे
मुद्रिता विजयन्तेतराम्

---

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीकामकोटिपीठाभिषिक्त-श्रीचन्द्रशेखरेन्द्रसरस्वतीजगद्गुरुवरैर्नारायणस्मरणपूर्वकं प्रियशिष्याय श्वेतारण्यनारायणयज्वने वितीर्णा महत्याज्ञा ।

श्वेतारण्यनारायणयज्वना त्वया विरचिता जगद्गुरुस्तवसुब्रह्मण्यशतकत्रेताग्निस्तुतिप्रमुखा आर्यदेवताभक्तिप्रवर्धकाः नास्तिक्यचनिवर्तकाश्च ३० ग्रन्थाः सन्ध्यौपासनब्रह्मयज्ञसूर्यनमस्कारदर्शतर्पणमन्त्रार्थाश्च सव्याख्या वृत्तालंकाररत्नावली रामस्तुतिश्च तत्तदुचिताधिकारिलोकोपकाराय मुद्रयित्वा प्रचार्यन्तामिति ॥

By the greatest of Paramahamsa-parivrajaka-acharyas, the world-teacher Sri Chandrasekharendra Sarasvati who adorns the Kamakotipitha, has been given, after invoking the blessings of Sri Narayana, to his dear disciple, Svetaranya Narayana Yajwa the following order :—

" By you, Svetaranya Yajwa ! should be printed and published, for the benefit of the respective worlds your many works which are as follows :—30 works like Jagadgurus stava, Subrahmanya-sataka, Tretagni-stuti etc., which are calculated to infuse in the minds of the reader devotion to the Gods and an abhorrence for atheism, explanatory works on subjects like Sandhy, Aupasana, Brahmayajnya, Suryanamaskara, Darsa tarpana etc , a work on literary criticism, *viz.*, Vrittalankararatnavali with commentary and Rama-stuti."

# ग्रन्थसूचिका

# शुद्धाशुद्धपत्रिका

| पृष्ठं | पङ्क्तिः | अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|---|---|---|---|
| ३ | १२ | प्रह | प्रह्व | ४७ | २ | चै | चै |
| ४ | १७ | टी | टी | ४७ | ८ | ण्यर्थि | ण्यार्थि |
| ६ | १ | दो | दौ | ४८ | २ | द्युत | द्युद्गत |
| ८ | १ | स्का | स्कर | ५० | १९ | रु | ग |
| १० | १६ | स्व | स्वं | ५२ | ८ | र्थं | र्थं |
| ११ | ७ | र्थ | र्ये | ५३ | १५ | श | गै |
| १३ | १८ | मन | म्त | ५६ | २ | य | थै |
| १४ | १३ | यत | युत | ६४ | १ | नम | नम्र |
| १६ | १२ | गु | गृ | ६९ | १ | लि | दृढि |
| १८ | १९ | गृ | गु | ६९ | २० | तं | तुं |
| २० | १४ | गृ | गृ | ७१ | २ | दि | दी |
| २६ | १ | त्रे | ते | ८१ | २ | कर्त्ता | कर्त्ता |
| ३० | १४ | नीह | नीहं | ८८ | ११ | ण्क | ण्कै |
| ३४ | १ | नु | तु | ९३ | १६ | द्द | द्दु |
| ३७ | १३ | क्त | क्तृ | ९४ | ७ | श | शं |
| ३८ | ६ | क्त | क्ति | ९४ | २० | घ | घै |
| ४० | २० | वका | वना | ९९ | १७ | न्विता | न्वितां |
| ४१ | ७ | मे | ये | १०२ | २० | त्त | त्तु |
| ४३ | ११ | क्षाथि | क्षाधि | १०३ | ६ | त्त | त्तु |
| ४४ | १३ | वरो | करो | १११ | १४ | लोपा | लोपां |
| ४५ | १९ | नाम्मे | नाम्ने | ११४ | १८ | शिक्षा= | शिक्षेन |

# श्रीचन्द्रशेखरेन्द्रसरस्वती
## जगद्गुरुस्तवः

यः कामकोट्याह्वयरम्यपीठी मध्यास्य संरक्षति भक्तलोकान् ।
जगद्गुरोस्तस्य दयादृशा स्यात् शिवं प्रजायै शिवमस्तु मह्यम् ॥

मित्रं कलानाथमिलोदयं बुधं गुरुं कविं शोभति मित्रनन्दनम् ।
दोषाकरानादर मप्यनारतं शुभप्रदं मज्जनता जगद्गुरुम् ॥ (२)

या सञ्चरन्ती जगदीशमूर्तिः यत्कीर्तिचन्द्रस्य शशी विवर्तः ।
तामग्निवर्णां तपसा ज्वलन्तीं समर्चये मद्गुरुवर्यमूर्तिम् ॥ (३)

श्रीकामहृग्विलसदेकाम्रनाथपुरनैकामलाभगणमत्-
श्रीकामकोटिमहितौकास्सुपुण्यपरिपाकार्चनीयचरणः ।
लोकान्तरालममलोकाभिनन्द्यशशिनीकाशकीर्तिपटलः
प्राकाश्यमेतु मम कांकायितस्य रविनीकाशलोकगुरुराट् ॥(४)

शिवस्य मैत्रीमधिजग्मुषे समाश्रितोत्तराशाय धनप्रदातृताम् ।
उपेयुषे मद्गुरुपीठिकाजुषे नमो वयं वैश्रवणाय कुर्महे ॥ (५)

कलाधरोत्तंसमपि स्मरारि मप्यन्यदुष्प्रापशिवाभिरामम् ।
अप्याहुरार्यास्समलोचनं यं नमोस्तु तस्मै गुरवे परस्मै ॥ (६)

श्रिया निवासं श्रितपारिजातं यशोदयालालितमात्तवेणुम् ।
गोत्रोद्धरं गोमणिमण्डितं श्रीजगद्गुरुं चिन्तय चित्त कृष्णम् ॥

आयातान् सविधं कुयुक्तिकुशलान्मायाविदो मानवान्
जेयानातनुते स्मितोक्तिशकलैरायासक्लेशं विना ।
नेयान् यः श्रुतिसारगं स्मृतिझरीं वैयासिकीं वाक्सुधाम्
न्यायात्पाययति प्रशान्तगुरुभिर्जीयाद्गुरूणां गुरुः ॥ (८)

शान्तिदान्तिविषयारतिमुख्यैः सततमेर्यमिगुणैरनुपक्तम् ।
जाग्रतं मति चकासतमग्रे योगिनां गुरुवरं स्मर चेतः ॥ (९)
अद्वैतसच्चित्सुखनित्यभूमस्वरूपमाख्यान्तमुपाश्रितानाम् ।
श्रीकामकोटीवरपीठराजे कृताभिषेकं वद देशिकं वाक् ॥ (१०)

अतुलसुधारसमधुरिमवचनानन्दितमनीषिनिकुरुम्बम् ।
श्रीकामकोटिपीठाधीशं पूजय जगद्गुरुं पाणे ॥ (११)

सततार्द्वैतवचोभिः विनोदिताशेषरसिकधौरेयम ।
जगतीगुरुमीक्षेथां ब्रह्मानन्देन तुन्दिलं नयने ॥ (१२)
श्रीपरहंसाचार्यं जगदाचार्यं महत्तमौदार्यम् ।
वेदान्तबोधनरतं पादावसकृत्प्रदक्षिणीकुरुतम् ॥ (१३)
स्वामिन् श्रीमन् सुधामन्नपि कुशलमपि स्वागतं सद्गुरो ते
गंगानंगान्तकांगामृतकरसदृशस्पीतकीर्ते सुमूर्ते ।
सारासारानुसारान्निजनयनयुगीपावितानेकसाधु
स्तोमामित्रालिदात्राश्रितरसिकजनग्रामबृन्दारकद्रो ॥ (१४)

श्रीमन्सद्गुरुनाथ सद्गुणतते रम्याकृते सन्मते
त्वां जानामि कलानिधिं कुवलयानन्दप्रदानोदयम ।

सन्मार्गे सततं स्थितं द्विजकुलाधीशं तमोनिर्णुदं
चन्द्रं किन्तु सदैव हन्त कलयाम्युर्व्यामदोषाकरम् ॥(१६)

स्वामिन्गुरुनाथ त्वं भास्वांश्च कलानिधिश्च भौमश्च ।
सौम्यो गीष्पति रपि कवि रपि सूर्यात्मज उदीर्यसे न तमः ॥
अस्मिन्कालेयकाले प्रबलतममहादोषसंघान्धकारे
श्रीमन्सद्देशिकेन्द्रामलपरममहस्त्वां वयं मन्महेऽर्कम् ।
तस्मादस्यां जगत्यां स्थिरमतितनुतां यातमत्रेतरत्र
स्वामिन्सद्धर्मगोष्ठीसरसिजविपिनं हर्षयात्मीयभासा ॥(१७)

जगद्गुरो तवोदयात्ततिस्सतां प्रमोदते
प्रकाशते कुमुद्वती यथा निशाकरोदयात् ।
प्रबुध्यते सरोजिनी यथा दिवाकरोदयात्
स्वचक्रवर्त्युदीतितो यथा मही प्रहृष्यति ॥ (१८)

निरस्यन्तं दूरं कुटिलतमकालेयसमय
प्रभूतामन्याय्यां सरणिमतिहेयां सुकृतिभिः ।
निबध्नन्तं नित्यैर्निगमवचनैरद्भुततमैः
निदानैर्भव्यानां प्रकटितचरीं पद्धतिमपि ॥ (१९)

दिवाभूतां रात्रिं दिनकरशतस्पर्धिमहसां
प्ररोहैस्तन्वन्तं मधुरमधुरैः कीर्तिनिचयैः ।
सदा दोषाभूतं दिनमपि तुषारद्युतिनिभैः
वितन्वन्तं वन्दे भुवनगुरुमर्केन्दुसदृशम् ॥ (२०)

श्रीमन्तं गणये जगद्गुरुमहं देवं जगच्चक्षुषं
चन्द्रं पूर्णकलं क्षमासुतमथो सौम्यं कविं गीष्पतिम् ।
छायानन्दनमात्मनीनमहमा सूर्येन्दुसंस्पर्धिनं
श्रौताचारमहोपकारबहुलीकारप्रवृत्तं सदा ॥ (२१)

श्रीभारत्योर्दुर्लभामेकधाम्नि ख्यातिं ब्रह्मा कर्तुमिच्छुर्गुरुं यम् ।
सृष्ट्वा ताभ्यां नित्ययुक्तं यदाख्यां तस्मा सांकामातनोत्तं नतोऽस्मि ॥

श्रीचन्द्रशेखरसरस्वति तावकीन
वाङ्माधुरीधुरि सुधैव सुधाऽजनिष्ट ।
या शर्करा जगति सापि च शर्कराऽभूत
किं चित्रमर्थयुगवर्जमिहास्ति वक्तुम् ॥ (२३)

श्रीचन्द्रशेखरसरस्वति भारती ते
धेनुर्न चात्र विशयः सुरभिर्यतोऽसौ ।
कामांश्च दोग्धि परिपूतसमस्तलोका
विश्वातिशायिमहिमाऽद्भुतविश्वरूपा ॥ (२४)

आचार्येन्द्र त्वन्मुखपद्मजाता सर्वान्लोकान्निष्कपटं पुनाना ।
विश्वख्याताऽन्यद्भुतविश्वरूपा धेनुर्वागस्मानुपसृष्टेतु ॥ (२५)

श्रीकामकोटीमहनीयपीठप्रतिष्ठितः प्रत्यगवेक्षसंज्ञ्यः ।
प्रत्यक्षशंभुर्विलसेद्यतीनामिन्द्रः पुरस्तादुत मध्यतो नः ॥
भूतेष्वात्मा सुतमात्मन्यनन्ते तोयं तोयेऽनन्तमाचार्यवर्य ।
संख्यावन्तस्त्वय्यमीषु त्वमाभास्यन्योन्याश्रित्याख्यदोषोमृषैव ॥

विश्वं विश्वं विश्ववन्द्यं भवन्तं विश्वस्यास्याचार्यवर्यं प्रशस्य ।
विश्वस्यैत्याजायते पूर्णकामं व्यर्थाः किंस्युः प्राप्य चन्द्रं चकोराः॥

[पिनाकिनीनद्यां स्नान्तं गुरुमुद्दिश्य कवेरुक्तिः]

पिनाकिनि पिनाकिनः शिरसि यामि नारोहणं
रमापतिपदांबुजान्न च गतास्म्यहं निस्सृतिम् ।
इति स्फुटमुदीक्ष्य तद्युगसदृग्जगद्देशिकं
निमज्जयसि तद्वयोत्सुकतयेव गंगाऽस्यतः ॥ (२९)

निस्संकल्पो भवेति श्रितमनुजमिमं प्रागभवानन्वगृह्णात्
संकल्पं त्यक्तुमुत्कः प्रतिदिनमुदितं सद्गुरो तं तमेषः ।
श्रीमत्पादाब्जवीक्षानतिमुखवरिवस्यादरोऽस्याद्य जातः
तं संकल्पान्तरस्थं लषति पुनरयं नैव दूरे विधातुम् ॥(३०)

भूयांसि भूयासुरमेयधाम्ने नमांसि वाचां मनसां च दूरे ।
निषेदुषे सात्विकचित्तपेटीं उपेयुषे सद्गुरुमण्डनाय ॥ (३१)

अविहितमहितं विहितं विहितं तु हितं न जातु चिद्विहितम् ।
दुष्कृतिनिष्कृतिकृतये गुरुपदपद्मनुपदं पदं कलये ॥ (३२)

गुरुकरुणा दातुमलं सम्पदमपि विपदमहह दातुमलम् ।
अत्र विरोधनिरोधे हेतु र्धातुद्वयी विभिन्नार्था ॥ (३३)

पर्याप्तं सुकृतं क्षितेरनुपमं भाग्यं सदार्यावलेः
धातुः सर्जनचातुरी किल नवा देहान्वितं सद्यशः ।

दौर्भाग्यं रिपुसंहतेर्बुधदृशां सौभाग्यसिद्धाञ्जनम्
रम्या योगिजनान्तरङ्गवसतिर्गुर्वाख्यया ख्यायते ॥ (३४)

कीर्तौ शीतकरो धृतौ हिमधरश्चण्डांशुरोजाभरे
गाम्भीर्ये सरितांपती रिपुवने वह्निः क्षमायां क्षमा ।
श्रीदः श्रीषु दयावतामचरमः सौजन्यपात्रं महत्
दौर्जन्यस्य लवित्रमद्भुतगुणः श्रीलोकसंदेशिकः ॥ (३५)

अहो भाग्यं पूर्णं सकलवसुधायास्त्रिभुवन
प्रविख्यातां कीर्तिं कुलमिदमुपैति द्विजनुषाम् ।
महिष्ठं द्राघिष्ठं भवुकमुपयातं पठितृभिः
गुरौ विद्यास्थानप्रचरणधुरीणेऽस्य जगति ॥ (३६)

इति श्वेतारण्यनारायणयज्वनः कृतिषु जगद्गुरुस्तवः संपूर्णः

## कल्पकवल्लीकपालीश्वरस्तुतिः

या कल्पवल्ली शतमन्यवे यं ब्रह्मेति होवाच कपालिनाथम् ।
तौ देवदेवौ महसा महान्तौ ध्यात्वा मुनिर्गच्छति भूतयोनिम् ॥

कल्पकवल्लि सतां ते कल्पकवल्लि प्रभाञ्जरीकान्ते ।
अल्पवलग्ने ऽनल्पाकल्पे मय्यस्तु दृष्टिरस्वल्पा ॥ (२)

कश्चिन्मयूरनगरे पश्चिमहरिदाननस्सरस्तीरे ।
सच्छिद्रपोऽसारे सच्चिरसुखदश्चकास्ति संसारे ॥ (३)

परमेश्वरमातनुते परमेश्वरि भिक्षुभिक्षुकं खलु ते ।
भिक्षुं करुणालहरी मंक्षु करोतीश्वरं विचित्रकरी ॥ (४)

इह धनिसंवमनाथे महति क्रुधे शर्व मावनीनाथे ।
नष्टा तव भिक्षुकता कष्टा भुवने ममेव नो जाता ॥ (५)

कबरीविजितभ्रमरी शबरी नवनीलविजयिकान्तिझरी ।
अमरीनुतगुणलहरी दूरीकुरुतां ममापदं गौरी ॥ (६)

वित्ताधीश्वरसख सा दत्ता केनाभिधा मता पुंसा ।
भिक्षुक इतीव मम ते दिक्षु विदिक्षु प्रचारमातनुते ॥ (७)

विधिसरसीतटनिकटे निधिरिव मूर्धस्फुरन्मणीमकुटे ।
चन्दनधवलकुचतटे सुन्दरि भासि त्वमवटनाभितटे ॥ (८)

लुब्धत्वाद्यदि भिक्षुर्लुब्धक परमेश्वराभिधां मंक्षु ।
त्यज वैराग्याच्चेत्त्वं निजनमदवनेऽपि किं विरागत्वं ॥ (९)

शुण्डाधरवरशुण्डादण्डापीनोरुरतुलदोर्दण्डा ।
मण्डितशशधरखण्डा खण्डितविमता चकास्तु चामुण्डा ॥(१०)

दोषाकरमपि कुटिलं शेषाभूषाभिरामतम विकलम् ।
शंबररिपुहर सुतमामंबरचारित्वतोऽब्जमिव भर माम् ॥ (११)

कलकण्ठस्वरसारे शितिकण्ठरते हृतार्तशोकभरे ।
मुखकण्ठाधरिताब्जे वैकुण्ठार्च्ये भजे त्वदंघ्रचब्जे ॥ (१२)

कल्पकवल्लीनायक कल्पितपालितहृतत्रिलोकीक ।
अल्पमनल्पदयाकर शिल्पद मामव शशांकखण्डधर ॥ (१३)

कालारातिकुटुंबिनि बालाहस्करुचिरक्तचेलसिनि ।
लीलास्मितजितवैरिणि शैलात्मभवे त्वदंघ्रिमर्चानि ॥ (१४)

हालाहलधर शंकर फालानलजर्जरीकृताब्जशर ।
लीलाकलितजगद्धर कैलासेश्वर मदन्तरे विहर ॥ (१५)

मन्दस्मितजितकुन्दे स्कन्दसमारोहपुरकृतानन्दे ।
वन्दनपरसुरबृन्दे स्कन्दप्रसविनि तवांघ्रिमभिवन्दे ॥ (१६)

बर्हिपुराधीशानं बर्हिसमारूढलालनाधीनम् ।
अर्हमनल्पदयाघनमर्हे मनो नित्यममलपरिधानम् ॥ (१७)

आप्ते त्वत्पदयुगलं प्राप्ते मयि दुःखसंघमंतरले ।
औदास्यं यदि भजसे सीदानि भवानि कुत्र भक्तिरसे ॥ (१८)

करुणावरुणनिवेशं तरुणारुणभूतनियुतसंकाशम् ।
संश्रितदहराकाशं संश्रितवानस्मि बर्हिनगरीशम् । (१९)

इति श्वेतारण्यनारायणयज्वनः कृतिषु कल्पकवल्ली
कपालीश्वरस्तुतिः संपूर्णा ॥

## आपदुद्धरणस्तोत्रम्

एकरसालरसारुहनिकटतटोटजनिवास गौरीश ।
सकलानतगतसंकटशकलीकरणोद्यमं नमामि त्वाम् ॥ (१)

एकाम्रविटपिनिकटे श्रीकामाक्ष्या भवन्तमीक्षन्ते ।
मूकास्तेऽपि महेश श्लोकानाचक्षते श्रवोमधुरान् ॥ (२)

एकाम्रनाथ विनमत्पाकारातिप्रभृत्यमर्त्यनतं ।
एकानेकमुदुस्महशोकानपनुद रुजाममूदभूतान ॥ (३)

एकाम्रमूलवसते श्रीकान्ताद्यैस्समर्चितादित्यैः ।
श्रीकामाक्षीरमण स्वीकार्योऽयं त्वयाहमगतिरिति ॥ (४)

आश्रयभेदाद्भेदो वक्तुं शक्येत गगनवद्भवति ।
इति सन्देहमपोहितुमाश्रय एकाम्र ईश जातस्तं ॥ (५)

अन्यभृतः कलकण्ठस्तिष्ठेन्मूले रसालमालानाम् ।
अस्याम्रस्याधस्तादन्याभृत एव कालकण्ठोऽस्ति ॥ (६)

श्रुतिरुद्घोषयति त्वां प्रथमं दैव्यं चिकित्सकं देवी ।
तदपि त्वत्पादनतं शंकर किमुपेक्षसे दीनम् ॥ (७)

मृत्युञ्जय इति लोके प्रथितश्शंकर वृथा किमभवस्त्वम् ।
अपमृत्युग्रस्तमिमं त्रातुं भीतिं गतोऽसि चरणनतम् ॥ (८)

शूलप्रिय शूलमिमं मत्कुक्षिस्थं पिनाकपाणे त्वम् ।
संहर तारक शंभो तारय मां रोगपूगवारिनिधेः ॥ (९)

एकाम्रनाथ तव पादसरोजयुग्मं
विश्वस्य विश्वपरिवन्द्य नमामि काञ्च्याम् ।
त्वं चेत्त्यजेरिममुदारगुणानवद्य
कस्येतरस्य पुरतोऽहमसौ प्रस्याम् ॥ (१०)

कामाक्षि तावककृपासरणौ जगत्यां
मूको निपत्य पुनराप कृतार्थभावम् ।

मूकादसौ गमितवान् किमु वत्सजन्वं
लेशं कृपालवलवस्य तनोषि नाव ॥ (११)

पित्रोर्गतिं व्रजसि किं गुह तारकारे
श्रीतारवाच्य किमु पालयसीममार्तम् ।
कौमारचेष्टितमवैति कुमार एव
तस्माच्छरण्य जगतां शरणं त्वमेव ॥ (१२)

अतिरिक्तो नासीति स्थाणोर्वरद स्तुतो मया नाद्य ।
तस्मादिममपराधं महस्व महनीयगुणगण स्वामिन् ॥ (१३)

वरदं वदन्ति कवय स्त्वां भगवन्नभयदाननिपुण इति ।
दासे प्रणतेऽमुष्मिन् त्वमभयं न तनुषे कुतो देव ॥ (१४)

हरिहरि हरिरिति भगवन् श्रीश त्वां हर इतीश्वरं ब्रुवते ।
हरणार्थकहृञ्धातो रूपद्वयमिदमतो रुजां हर मे ॥ (१५)

इति श्वेतारण्यनारायणयज्वनः कृतिषु
आपदुद्धरणस्तोत्रं संपूर्णम्

---

## वेदपादनक्षत्रमालिका

इभराजमुख ज्योतिरिनकोटिप्रभं क्रियात् ।
इहामुत्र प्रजानां शं इदमासां विचक्षणम् ॥ (१)

नमतामेकचूतेश नममत्वद मत्पग ।
नमस्तुभ्यं च तस्मै च नमो यत्र निषीदसि ॥ (२)

तृतीयनयनज्वालातृणायितसुमायुध ।
त्रिपाद्भासि हरिस्थेश तृतीयस्यामितो दिवि ॥ (३)

तेजस्विन् भक्तिशाणाश्मतीजितान्तर्लसन्मणे ।
तेजोविनग देहीश तेज ओजो बलं यशः ॥ (४)

सौधाकरसुधाबिम्बसौधमध्यविभासिनम् ।
सर्वे शर्वमुपासीनाः सर्वमायुरुपासताम् ॥ (५)

साहचर्यञ्च भूतेन साहित्यं मृगलक्ष्मणा ।
साहिभूषाऽस्ति ते पत्युः सा हि श्री रमृता सताम् ॥ (६)

एकचूतपतिः काञ्ची मेष भुक्त्वा गरीयसीम् ।
एति भोक्तुं परां तन्वी मेवमेतन्निबोधत ॥ (७)

नित्यानामपि वस्तूनां नित्यात्मन् चिन्तयन्ति ये ।
नित्यं शेषान्तरस्थं त्वां नित्यास्तेऽनुचरास्तव ॥ (८)

ब्रह्माण्डभाण्डमृत्स्नेयं ब्रह्मिष्ठेति वृषस्थिता ।
ब्रह्मनिष्ठाः शिव प्राहुः ब्रह्माणस्त्वा शतक्रतो ॥ (९)

उद्वोढुं क्व मनो मे त्वामुमेश गिरिसन्निभः ।
उक्षाऽपि वहते यस्त्वामुत्तिष्ठन्नोजसा सह ॥ (१०)

सोममण्डितमूर्धानं सोमपीथिकलेबरम् ।
सोमेज्यं वृषगं वन्दे सोममिन्द्रचमूसुतम् ॥ (११)

यष्टुं यज्ञपतिं यज्ञैर्यते तं नन्दिनं गतम् ।
यष्टिभीत्या गणा नित्यं यस्य विश्व उपासते ॥ (१२)

गिरीशांगुष्ठसारज्ञ गिर्यभ्रः साधि यातु तत् ।
गिरिद्रुहापि यद्रीत्या गिरा वज्रो न संभृतः ॥ (१३)

पूर्वपक्षितनानात्व पूर्वपूर्व विमानग ।
पूर्णं त्वां ज्ञातुमनलं पूर्वे विश्वसृजोऽमृताः ॥ (१४)

विश्वंभरमुखैर्लेखैर्विश्वैर्नुत करिस्थित ।
विश्वेश पाहि मां यत्त्वां विश्वरूपमुपह्वये ॥ (१५)

प्रकृष्टकाण्डद्वितयप्रतिपादितवैभवम् ।
प्रत्यग्ज्योतिः प्रवीक्षध्वं प्रस्थावद्रथवाहनम् (१६)

समं यत्रेश मोहिन्या समञ्चसि सुमेषुणा ।
सहसाऽऽत्मवशं कामिसहस्रं तत्र नीयते (१७)

आम्रेश शोभसे तं त्वमारुह्याश्वं प्रयाति यः ।
आशुगस्पर्धयेवासौ आरोहन्नुत्तरां दिवम् ॥ (१८)

भूतप्रियाकल्प भवद्भविष्यद्भूतात्मकाऽऽन्दोलिकया विलासिन् ।
भूतेश भूयोऽपि भवानशेषभूतस्य जातः पतिरेक आसीत् ॥

समानानन्दमाधातुं समस्तानां भवान्नृणाम् ।
समाम्नायैकचूतान्तः समारूढः प्रदृश्यते ॥ (२०)

यतेरत्र कथं तत्र यष्टुं स्थातुं च मादृशाः ।
यज्ञेशं नृत्यकृद्रस्तु यत्रैतदुपदृश्यते ॥ (२१)

ताराधिपाकल्पकिरीटकोटिं तार्क्ष्यध्वजाद्यर्चितपादपीठाम् ।
तालीफलोरोरुहमाश्रयेऽम्बां तामग्निवर्णां तपसा ज्वलन्तीम् ॥

कल्याणभक्षगौ वां मे कल्याणायास्तु तच्छिवौ ।
कल्यो मुनि र्यदिच्छुः सत्कल्याणो द्रोण आहितः ॥ (२३)
सत्पुण्यकोटियानस्थः सद्धियं यः प्रयच्छति ।
सर्वे तं योगिनः शर्वं सन्तमेनं ततो विदुः ॥ (२४)
पुरुषव्याघ्रवाहस्थं पुरुरूपममायिनम् ।
पुरुषाः शिवमीक्षध्वं पुरुषं जातमग्रतः ॥ (२५)
इन्द्रं वृषाणामधिरुह्य रम्यमिन्द्रस्तुतः मावभृथाप्लवोऽयम् ।
ईं द्रावयन् अस्तु शिवः पशूनामिन्द्रः पुरस्तादुत मध्यतो नः ॥
नमः शिवाय शंभवे नमः शिमामृग्वेन्दवे
नमस्तमस्तहेतवे नमो हिरण्यबाहवे ॥ (२७)
य एकचूतनायकोत्सवस्तवं समारयेत् ।
द्विधा स्थितैः स शत्रुभिः न हन्यते न जीयते ॥ (२८)

इति श्रीनारायणनारायणयज्वनः कृतिषु श्रीमदेकाम्रनाथ
महोत्सववेदपादनक्षत्रमालिकास्तवः संपूर्णः ॥

## तत्तत्समयस्मृतदेवतानिकटनिवेदनम्

ईशः श्रीपतिरात्मभूरनुदिनं दद्युर्वसिष्ठः सुखं
कुर्युः शक्तिपराशरौ च मुनिराड्व्यासः शुकः सन्ततम्
सच्चिन्मोदपरात्मबोधमतुलं श्रीगौडपादस्तथा
गोविन्दश्च जगद्गुरुश्च भगवत्पादो हरन्त्वापदम् ॥ (१)

चिदानन्दस्वरूपं निरुपममखिलापूरकाखण्डमकं
स्वप्ने वा जागरे वा मम निकटतटं प्राप्य गौरीपतिर्वा ।
आहोस्विच्छ्रीपतिर्वा निरवधिकदयासान्द्रदृष्टिप्रसादात्
जीवन्मुक्तत्वकाम्यानर्गलितमनसे बोधयत्वाशु मह्यम् ॥ (२)

विष्णो विश्वविधातृतुल्यहतुगैव र्वेदैर्गीते प्रार्थित
प्राजापत्यनरोपनीतचरुगा श्रीराम सीतापते ।
पित्राज्ञापरिपालनव्यसनिनाव्याजेन निष्कण्टकं
पृथ्वीमण्डलमाचरय्य लसते तुभ्यं नमो ब्रह्मणे ॥ (३)

नत्वा न त्वाप्नोति यं अखिलो लोकः कदापि सन्तापम् ।
स भवतु कुञ्जरवदनः सर्वविपच्छृंखलावनच्छेदी ॥ (४)

नीरजासनमामीनां नीरजासनवल्लभाम् ।
नीरजाक्षस्नुषां वन्दे नीरजांघ्रिकराननाम् (५)

श्रीदेवसेनायतपार्श्वधाम्ने श्रीसूनुधाम्ने गुहदेवनाम्ने ।
श्रीदार्चिनायामलहेमदाम्ने श्रीपुष्टिदायानतिरस्तु भूम्ने ॥ (६)

नमः शिवायास्तु सहस्रनाम्ने नमो भवायास्तु सहस्रधाम्ने ।
नमोऽस्तु ताराय सतामवित्रे नमोऽस्तु देवाय सुखास्पदाय ॥

अन्तर्वाणिनिकायस्य जीवातुर्धातुरास्यगा ।
वाणी जगत्रयीहेतु भूयादायासहारिणी ॥ (८)

हरे हरेरघं तथा रविर्यथा तमो जगत्-
प्रभुः प्रभुस्त्वमेव मे भृशं विधातुमीप्सितम् ।

नरा न ाम ते पदं त्यजन्ति मंगलार्थिनोऽ-

नलं न लंघितुं भवाब्धिमंग कृष्ण ते स्मरन् ॥ (९)

सरस्वति सरस्स्वतिस्फुटसिताम्बुजानां ततिः

तपस्यति नवासनीभवितुमाशयेवान्विता ।

सुयुक्तमिति मन्महे तदिदमेव नो चेत्कथं

विहाय बहु वस्त्विदं तव तदासिकायां रुचिः (१०)

वाणी वाणि ममानिशं शुभगुणानुच्चावचान् स्तौतु ते

पाणी पाणिजिताम्बुजे तव पदाम्भोजद्वयीमर्चताम् ।

नेत्रे नेत्रजितासितोत्पलवनि त्वद्विग्रहं पश्यतां

चित्तं चित्तजशान्तये स्मरतु ते सच्चित्सुखाढ्यं महः ॥ (११)

सावित्री सावित्रीं गायत्रीं श्रद्धयान्वहं जपताम् ।

साऽवित्री प्रसवित्री जगतां भूयान्ममाधिपरिहर्त्री ॥ (१२)

उमायमारातिकरान्तराभ्यां समादृतश्यामलकुन्तलाय ।

कुमारसंज्ञासहिताय तस्मै कुमाररूपाय नमः परस्मै ॥ (१३)

गुरुपादुके यथा ते प्रसादतो मे निवर्तते विशयः ।

शास्त्रेषु गदो देहे तथाधिरखिलो निवर्ततां शीघ्रम् ॥ (१४)

गुर्वीं रक्षोमूलामापदमुन्मूल्य लोकमवितवतः ।

श्रीरामचन्द्र भवतः कियती संप्रति मदाधिहृतिः ॥ (१५)

गुरुं गुरूणामपि देवदेवं विभुं विभूनामपि राजराजम् ।

परं परेषामपि सारसारं शुभं शुभानां भज कालकालम् ॥ (१६)

वासुदेव तव दास्यमथार्चा ध्यानमप्यवगतिश्च कया चित् ।
मुक्तिमेव विषया विदधाति प्रत्युतालसतमा वयमत्र ॥ (१७)

महागणपते विधिर्विधुरपि त्रिणेत्रस्तथा
त्वदीयपदपंकजस्मरणवीतविघ्नाद्रयः ।
जगत्सकलमातनोत्यवति हन्ति चाकुंशत
स्तदाश्रितजनार्तिहृन्न भवति त्वदन्यः क्वचित् ॥ (१८)

विघ्नेश विघ्नान्विविधान्विहत्य विशेषविख्यात विचित्रविद्याः ।
विरच्य विश्वैकविभूतिवित्त विदां विभात विजयं विभुस्त्वं ॥

पते पशूनां परितापपाशपरंपरापाशितपश्वभिन्नम् ।
पर्याकुलं पश्य पदे पदे मां पयोजपर्यायदृशा परेश ॥ (२०)

दिनेशबिंबान्तरदीप्र विष्णो दिवानिशं दिव्यसभासदीड्य ।
दिष्टानिसृष्टार्तिनिवृत्तिदीक्ष दीनाय मह्यं सुखदिव्सुरेधि ॥ (२१)

सदा कुमाराय मुदाकराय विदारिताराय सदादराय ।
दयासमूहाय जयावहाय मयूरवाहाय नमो गुहाय ॥ (२२)

मल्लीलताकुड्मलदन्तकाय मलीनसर्वामयमोचकाय ।
वल्लीसमालिंगितविग्रहाय मल्लीनचित्ताय नमो गुहाय ॥ (२३)

गद्यं वा पद्यं वा गलगतगरल त्वदीयकारुण्यात् ।
गदितुं शक्तिर्भवति हि गदितोऽसीशः समस्तविद्यानाम् ॥ (२४)

शशिशकलवतंस मोहदावे पतितवतः परितापपाचितस्य ।
मम मखमदनान्तकान्धकारे भवतु भवान् भवभीतितापहारी ॥

महेश मायिन्महनीय मन्त्रैर्मखेश मायातिग मारमाथिन् ।
मधुद्विषा मानित मन्दमन्दे महोक्षमारूढ मयि प्रसीद ॥ (२६)

महेश मदनान्तक प्रमथमाननीयानिशं
महामहिममण्डित प्रमदरूप मायातिग ।
महोमय महोज्ज्वल प्रगतकल्पवृक्ष प्रभो
महत्तम महीयसां मम महत्तमो मर्दय ॥ (२७)

सर्वसहायां मतः समस्तसद्भिप्रसंसेवित सप्तकील ।
समिध्यमानः समिधां समूहैः संयोजयास्मान्सहसा सहर्ष्या ॥

एकाक्येव जगत्सु यश्चरति यद्धीवृत्तिसंप्रेरकं
यस्यान्तर्विलसन् हिरण्मयवपुः सद्भिर्विभुश्चिन्त्यते ।
यस्याहन्यहनि प्रणामनिचयैरुल्लाघता प्राप्यते
छायाप्रीतिजुषे नमस्नतिमुपे तस्मै नमो ज्योतिषे ॥ (२९)

यस्या मूत्रशकृत्पयोदधिघृतप्राशी त्वगस्थिस्थिता
न्याधूयाखिलदुष्कृतानि विमलस्वान्तः परं जायते ।
यत्पृष्ठे कमलाऽस्ति यत्पदरजो वायव्यमित्युच्यते
स्नानं सन्ततमस्तु मे भगवती सा कामधेनुर्मुदे ॥ (३०)

मातः कामदुधे त्वदन्वयभवाः सन्तीह याः संयुताः
नानावर्णमतल्लिकाः शुभकृतः सर्वप्रिया धेनवः ।
तासामेव शकृन्ति भूतिभसितं भस्मेति रक्षेति च
क्षारश्चेति समस्तरोगहरणे प्राप्तानि भैषज्यताम् ॥ (३१)

विश्वस्य त्वामिदमुपगतं पत्तनं विश्ववन्द्य
श्रीवैदेहीरमण भगवन् जीविकायै सुखेन ।
युद्धोदन्तश्रवणचकितस्वान्तमापन्नबन्धो
त्रायस्व त्वं सपदि सवधूपुत्रसद्बान्धवं माम्॥ (३२)

हरे हरस्यान्तरमाश्रितानामशेषमाधिं विविधं च रोगम् ।
अतस्त्वदीयं पदपद्मयुग्मं विश्वस्य विश्वेश पुरेऽत्र वर्ते ॥ (३३)

राम त्वयि स्वादुनि वस्तुनीव ममस्तमद्योगिगणा रमन्ते ।
अतस्त्वदीयाम्मधुरामभिख्यामाख्याय जीवामितरां पुरेऽस्मिन्
हरे हराद्य मम संहरारीनाभ्यन्तरांश्चापि बहिर्भवांश्च ।
लीढामजस्त्रं भवतः पदाब्जमरन्दधारां मम मानसालिः ॥ (३५)

मोचाफाणितशर्करामधुपयोद्राक्षारसालादिभिः
स्वाद्यैः स्वादुपदार्थतल्लजभरैरास्वादितैर्जायते ।
उद्वेगो जगतीतले किल नृणां श्रीराम माधुर्यभाङ्
नाम त्वत्कमहर्निशं प्रपिबतां नोद्वेगगन्धः सताम् ॥ (३६)

नानाविधाकारमनीकवीरं मीनांकवैरिप्रियमस्तमायम् ।
दीनानुकंपामरिदीशमीशं ज्ञानावहं बर्हिणवाहमीडे ॥ (३७)

कुमारकोष्ठस्थमुमातनूजं कुमारनामानममेयशोभम् ।
शमादिमत्सात्त्विकमानसेड्यं नमामि केकावदधीशयानम्॥(३८)

वन्दे शारदचन्द्रसुन्दरमुखीमंभोदनीलालकां
व्याकोचाब्जदलायताक्षियुगलां बिंबोपमानाधराम् ।

कुन्दस्मेरदावलिं कुलगिरिप्रस्पर्धिवक्षोरुहाम्
निष्टप्तामलहाटकांगलतिकां कारुण्यसिन्धुं श्रियम् ।। (३९)

यद्रूपं धनधान्यमुख्यमखिलं वस्तूच्यते तामिह
प्रध्वस्तार्तिमुपह्वये मम गृहे वस्तुं श्रियं देवतां ।
श्रीः सा मे भजतु स्थितिं मम धियं मद्वाचमास्यं च मे
मच्छ्रोत्रेन्द्रियसंगता पुनरथालक्ष्मीश्च मे नश्यतु ।। (४०)

दुर्गां दुर्गतिहारिणीं दुरुदितस्फीतामदुन्माथिनीं
देवीं देशविपद्विदारणचणां देवैः सदा राधिताम् ।।
श्यामांगीं शरणप्रपन्नकरुणां शस्यां श्रुतीनां चयैः
प्रत्यग्दृष्टिगवेष्यशैवविभवं दीनः प्रपद्येतराम् ।। (४१)

शक्तिविभूषितहस्तं शक्तं कृच्छ्रं समस्तमपहर्तुम् ।
सुब्रह्मण्यं वन्दे सुन्दरचरणं जगत्रयीशरणम ।। (४२)

श्रीरामनाम रसखण्डरसालमोचा
द्राक्षासुधामधुरुचीरधरीकरोति ।
इत्युद्गिरन्ति रसिकाः कथयाम्यहं तु
दूरीकरोत्यखिलवस्तुरुचिं किलेति ।। (४३)

खरकरकुलजलनिधितः संभूतः कलितकुवलयाह्लादः ।
लक्ष्मणयुक्तः सततं सन्मध्ये लससि राम चन्द्रस्त्वम् ।। (४४)

चिदानन्दस्वरूपं परममुपदिशे ज्जागरावस्थितौ वा
स्वप्नावस्थाविशेषे हिमगिरितनया तत्सुतस्तत्पतिर्वा ।

लक्ष्मीर्लक्ष्मीपतिर्वा विधिरुत गृहिणी तस्य वा शंकरो वा
लोकाचार्यः प्रसादातिशयवशगतः प्राप्य मे सन्निकर्षम् ॥
यद्विश्वादिविराडादिजीवेशनवकात्मकम् ।
समष्टिव्यष्ट्युपाधिभ्यां तद्ब्रह्मास्तु मदिष्टकृत् ॥ (४६)

आर्यदेवतायमकम्

शारदाऽखिलभृतौ विशारदा कामितार्थकरवीथिकामिता ।
देवतार्चितपदोक्तिदेवता सर्वदा मनसि भातु सर्वदा ॥ (१)
नारदादिविकसन्मना रदाभाजिताब्जमुषमा सभाजिता ।
देवताभिरुदिताधिदेवता मानसेऽस्तु वरदेव मानसे ॥ (२)
इन्दिरा कमलमञ्जुमन्दिरा वन्दिताऽमरगणैरनिन्दिता ।
आननाधरितचन्द्रमानना संकटं हरतु मे विशंकटम् ॥ (३)
रामणीयकनिधिः सतीमणी रागतापहृदमायतागता ।
वन्दनीयमहिमाऽब्धिनन्दिनी भासतां सततमग्रतः सताम् ॥ (४)
मंगलानि भुवि सर्वमंगला तन्वती कलिमलं विधून्वती ।
श्रीमती मतिमती सुधीमती राजतां प्रदिशतीभ्यराजताम् ॥ (५)
लोचनाब्जमिहिरत्रिलोचना श्यामलांगरुचिवीचिकोमला ।
सर्वदासनिवहस्य सर्वदा तत्पराऽस्तु भरणे परात्परा ॥ (६)
राजमानतमराजहंसगं नारदादिभिरनारतानतम् ।
भावये भवुकभावनान्वितं भारतीवदनभारतिं विधिम् ॥ (७)

पंकजासनमपंकमानसैः योगिभिः सनकयोगिभिः स्तुतम् ।
बोध बोधपरिबोधकं जगत् सृष्टवन्तमतिसृष्टसंपदम् ॥ (८)

देवदेव महितानुभावदे तावके विपदरण्यपावके ।
पद्युगे ऽच्युत मतेरसद्युगे वर्तनं सकलपापकर्तनम् ॥ (९)

माधवे स्पृहयतीज्यमाधवे दर्पकं कृतवतीद्धदर्पकम् ।
कर्तरि त्रिजगतां प्रहर्तरि द्वेषिणां भुवि धियो मनीषिणाम् ॥

पर्वतेन्द्रसुतयाऽपि पर्वत राजते सुनयुगेन राजते ।
यस्तमादिमनिर्लिपमुत्तमाः संश्रयन्तु करुणैकसंश्रयम् ॥ (११)

शंकरे विमलचित्तकिंकरे पंकजेक्षणनतांघ्रिपंकजे ।
भाविते मुनिगणैः प्रभातिते [प्रभोऽइते] ज्ञेयतां ननु मतिर्निधीयताम्

वल्लभा मुदितविघ्नवल्लभा मानितापमगणेन मानिता ।
वारिजामननतांघ्रिवारिजा रक्षतात्पतिकृताघरक्षता ॥ (१२)

अर्चिताऽमरगणेन चर्चिता चन्दनादिभिरपेतनिन्दना ।
चञ्चलासमरुचाप्यचञ्चला वल्लभाऽवतु गणेशवल्लभा ॥ (१४)

मोदकं गुरुतमप्रमोदकं भक्षयन्तमुदिताशुभक्षयम् ।
वारणेन्द्रमुखमार्तिवारणे सादरं भज विनाऽलसादरम् ॥ (१५)

तारकेशभृति लोकतारके वल्लभे दिविषदां मवल्लभे ।
नायकेऽस्तु जगतां विनायके मानसंगविगमाय मानसम् ॥(१६)

वल्लिका विनतकल्पवल्लिका यूथिकामदशदन्तवीथिका ।
भासतां परिहृताशुभा सतां मानसेतुदलनाम मानसे ॥ (१७)

पालिकाऽस्तु भुवनस्य वल्लिका चोलिकारुचिरदेहवल्लिका ।
बालिका मनतमेव मल्लिकामालिकातिरमणीयचूलिका ॥ (१८)

सेनया ऽऽश्वसिमि देवसेनया भावयाप्यगदभेदभावया ।
लीलयार्पितधनावलीलया दीनयाचनभृतावदीनया ॥ (१९)

[व्याख्या-सेनया पतिसहितया। भवे संसृतौ भवः भावः याप्यः निन्द्यः गदः रोगः तस्य भेदने भावः प्रीतिः यस्याःतया। लीलया अक्लेशेन अर्पिता धनावली इला भूमिश्च यया तया दीनानां याचनस्य भृतौ पूरणे अदीनया धीरया देवसेनया आश्वसिमि अश्वासं यामि ॥]

सन्महाविभवया लसन्महासेनयाऽऽश्वसिमि देवसेनया।
भीरुधावितृनिलिंपभीरुधा लोकयाचितकरावलोकया ॥ (२०)

[भीर्विति भीरूणां धावितृणां पलायमानानां निलिंपानां भियं रुणद्धीति तथाविधा तया। लोकेति लोके याचितकरेषु याचकेषु अवलोकः कटाक्षः यस्यास्तथाभूतया]

तारकोपपतदुग्रतारको वासवेश्म मनसोऽस्तु वासवे ।
भावुकोत्तमतमे सभावुको दीनधीरपि गुहो नदीनधीः ॥ (२१)

[भावुकोत्तमतमे भक्तश्रेष्ठ सभावुकः सकुशलाभिप्रायः]

चन्द्रकस्रवदनं सचन्द्रकं यानमुत्कमयदुक्षयानमुत् ।
षण्मुखं सफलयद्वृषण्मुखं तन्महे हृदि महो वितन्महे ॥ (२२)

[चन्द्रेति महेउत्सवे सचन्द्रकंयानं=मयूरवाहनं उत्कं=
सप्रीतिकंयथातथा अयत्अधिगच्छत् चन्द्रवत्कम्रं कमनीयंवदनं-
यस्यतत् उक्षयाने शिवे पितरि मुत यस्यतत्। वषण्मुखं व-
षट्कारादिमंत्रभरितं यज्वानं। सफलयत् अभीष्टफलयुक्तंकुर्वत्
षण्मुखं नन्=प्रसिद्धं महः ज्योतिः हृदि वितन्महे]
शंकरांघ्रिजलजातकिंकरानन्दिनि प्रथितधाम्नि **नन्दिनि**।
वेत्रपाणिकमले त्यज त्वपां चित्तमेव कुरु योगिसत्तमे ॥ (२३)
शंकरे सुमनसां प्रियंकर शंमति क्षयविहीनशं सति।
मौनिनो वितनुतेऽवधानिनो यस्सुधीरमवतात् स नः सुधीः ॥
अञ्जना प्रमुदितप्रभञ्जना यं प्रभाविनमसूत सुप्रभा।
तीर्णवारिधिमवारितं परैस्तं नमामि जनमानिताकृतिम् ॥ (२५)
हेमपिंगलममंगलं रिपोर्मंगलं कपिकुलस्य पुष्कलम्।
वायुसूनुमिनसूनुसख्यगं मानसे तनुत मानवा भुवि ॥ (२६)
**वैनतेय**मनिशं नते जने सादरं विषधराशनोदरम्।
साममारवपुषं सुधीपुषं भावयेऽन्तरमितप्रभावकम् ॥ (२७)
लीलया हृतसुधाघटं सुधाभानुभानुसितकण्ठभासुरम्।
**पक्षिणां** धवमुदूढमाधवं ये स्मरन्ति न भयं धरन्ति ते॥(२८)

## अवग्रहनिग्रहः

सुख्यन्तु क्षितिमण्डले स्थितिजुषः शिष्टाः प्रशान्ताः सदा
कावेरी प्रवहत्वदभ्रसुखदा मद्ग्राममध्ये नदी।

मेघा वारि यथोचितं मम महीभागेषु वर्षन्त्वमी
पुष्टान्नो रचयानि वैदिकमहाकर्माण्यतन्द्रो मुहुः ॥ (१)

सह्याद्रिजाद्याः सततप्रवाहाः सतां सुखाय प्रवहन्तु नद्यः ।
अन्यूनताधिक्यमजस्रमस्मद्ग्रामेषु वर्षन्तु घनाः शिवाश्च ॥

वानस्पत्यवनस्पतीन्फलभरैः कुर्वन्नतान्सर्वतः
तन्वन्शालिचयांश्च धान्यकणिकासन्तानसंशोभिनः ।
वीर्योदग्रमहौषधीर्विपुलयन् भिन्दन् ज्वरादीन्द्रुतं
सर्वान्व्याधिगणान् जगच्छिवकरो वर्षत्वयं वारिदः ॥ (३)

ऋश्यशृंग मुनिमानसहंस त्वद्यशः सकलविष्टपवित्तम् ।
वृष्टिमिच्छुभिरमेयफलां यज्जप्यते मनुगणस्तव सद्भिः ॥ (४)

मुनिमवग्रहनिग्रहतत्परं विषयविस्तृतिविस्मृतिविश्रुतम् ।
हरिणशृंगमनिन्द्यगुणाकरं स्मरति यः स न पश्यति संकटम् ॥

ऋश्यशृंग मुनिपुंगव शान्तावल्लभाशु जनयोत्तमवृष्टिम् ।
धान्यराशिमभिवर्धय सम्यग्लोकसौख्यमनुकूल विधेहि ॥ (६)

ऋश्यशृंग ऋषितल्लज ऋक्षस्वामिवत्कुवलयप्रियकारिन् ।
वृष्टिमाशु जनयन्ननुकूलासुर्वरां मम महीं वितनुष्व ॥ (७)

शाम्यन्तु व्याधयः सर्वे शान्ताकान्तप्रसादतः ।
वर्षन्तु वारिदाः संप्रत्यंबु कंबुसमच्छवि ॥ (८)

भूमण्डले तत्र च चोलदेशे तत्रापि सत्क्षेत्रवरेषु तत्र ।
मद्ग्राममध्येऽत्र च मन्महीषु यथोचितं वर्षतु वारिवाहः ॥ (९)

नद्यो यन्तु कवेरजाप्रभृतयो युक्तप्रवाहान्विताः
पर्जन्याश्च यथोचितं समुचितं काले प्रवर्षन्त्वमी ।
ओषध्यः फलभारनम्रशिरसो भूयासुरुच्चावचाः
पुष्टान्नास्तनुयुः श्रुतीरितमहाकर्माणि सन्तः सदा ॥ (१०)

## कावेरीस्तवः

त्वां निधिर्वारिचयैर्यदीयैर्मिश्रोऽनिशं स्पृश्यतमत्वमेति ।
सह्याचलेन्द्रस्य नितम्बदेशादुद्दित्वरी पातु मरुद्वृधा सा ॥ (१)
सह्यादसह्यार्तिनिवर्तनार्थमुद्भूतवत्या भुवनं भवत्याः ।
कावेरि नीरेण मनोहरेण स्पृष्टोऽधिगन्तुं न हि कष्टमीष्टे ॥ (२)
कावेरि पाथःपृषतै स्त्वदीयैः पृक्तस्य तस्यापि समीरणस्य ।
महत्त्वमन्यादृशमेव येन बद्धो जनः संसृतिबन्धमुक्तः ॥ (३)
सितासिताभ्यां महिमा नदीभ्यां कावेरि तुंगस्तव यत्पुनाति ।
त्रिरात्रमेका स्वतटे वसन्तं पञ्चाहमन्या भवती तु सद्यः ॥ (४)
कावेरि कस्ते पयसः प्रभावः स्वाद्यं यदापीतवतां जनानाम् ।
कुशाग्रसाम्यं भजते मनीषा शरीरमप्युज्ज्वलकान्तिमेति ॥ (५)
भुक्तिप्रदा काचन निम्नगोर्व्यां मुक्तिप्रदात्री वहते च काचित्
कवेरकन्ये भवती तु भुक्तिं मुक्तिं च लोके ददती विभाति ॥ (६)
सह्याद्भवित्रीं जगतः सवित्रीं असह्यतापस्य निवारयित्रीम् ।
सह्यां महद्गौरवमाप्तुमिच्छुर्नह्यान्नदीं कः कृतधीर्मनुष्यः ॥ (७)

आमूलमासिन्धुतटं मुरारेः पुरद्विषश्चायतनैर्विचित्रैः ।
मरुद्वृधे मण्डितमत्र तीरद्वयं तवैवास्ति नदीषु कस्याः ॥ (८)

कावेरि लोकत्रयपावनास्ते ये तावकीनं तटमावसन्ति ।
पश्यन्ति पाथस्तव ये स्पृशन्ति पिबन्ति ते कीदृश इत्यवेयाम् ॥

सह्यात्प्रभूता मजवप्रयाता श्रीरंगयाता श्रमहारिवाता ।
दयासमेता दलितार्तिजाता न श्लाघिता किं भुवि लोकमाता ॥

कावेरि रोधोरुहकीर्णपुष्पैश्चितं पयस्तावकमीक्षमाणः ।
शिलादिसंघट्टजमंबुनादं श्रृण्वन्कदाऽऽनन्दमुपैम्यमन्दम् ॥ (११)

कावेर्यखण्डां भवतीमुतान्यां स्मरन्वदन् यांश्च विलोकमानः ।
जिघ्रन् स्पृशन् यः प्रविशन् पिबन् स्यान्महीतले पावनपावनः सः ॥

कावेरि निष्कारणरक्षणेन त्वय्युत्सुकायां न हि शब्दमात्रं ।
भवेद्बहुव्रीहिविलासवत्ता सर्वेषु वाच्या विषयेषु किन्तु ॥ (१३)

कवेरकन्ये न तु जातु तस्य कवेरकल्या पदवी भवित्री ।
यस्त्वत्पयःपूरगुणाननर्वान् श्रृणोति संचिन्तयते स्तुते च ॥ (१४)

निर्व्याजमक्लेशलवं नितान्तं समीप्सितापूरणतत्परायाः ।
कावेरि का ते जगतामवित्र्याः मां रक्षितुं क्लेशकणी भवित्री ॥

असह्यमह्यार्तिनिवृत्तिकाम्यया विनिर्गता सह्यगिरीन्द्रसानुतः ।
बहूनि रूपाणि च बिभ्रती सती धुनीषु धन्या त्वमिवात्र का धुनी ॥

## शिवकीर्तनम

देवदेव शिव दीनदयालो दुरितमीश हर मे ।
कामकोपमदमोहमुखारिं दलय सर्वमनिशम् ॥ (१)

कालकाल कलिदोषविभेदे कलय कार्यममलम् ।
पारिजात नतकामितदाने पंकजोपमांघ्रे ॥ (२)

वेदवेद्य हर सुन्दरकीर्ते महितकान्तिविनते ।
वेदनामपि च रोगभयोत्थां विहितकाम हर मे ॥ (३)

लोकशोकहर नित्यविभूते भसितफालफलक ।
प्राणनाथ गिरिराजकुमार्याः परिहराघपटलम् ॥ (४)

अन्धकादिदववदावकृशानो वृषगते पशुपते ।
बन्धमुक्तिकर कारणमूर्ते शमितसंश्रितार्ते ॥ (५)

मानसेन पुनरीश शरीरैर्वचनतश्च कलितम् ।
चक्षुषा रसनया च समस्तं शमय देव दुरितम् ॥ (६)

आत्मनीनमथ भौतिकदैवं गिरिश तापममितम् ।
वह्निभानुशशिलोचन गौरीभव कुरुष्व गालितम् ॥ (७)

भक्तमेनमनुपालय पोतं भवपयोधिपतितम् ।
दर्शय त्वममलं निजदेहं मम पुरः शुभगेहम् ॥ (८)

भूतिभूष भवबन्धविमुक्त भूध्रजानुरक्त ।
भूसुरं करुणया सहदारं सात्मजं सुखय माम् ॥ (९)

नागराजनवभूष पिनाकिन् नटपते परमात्मन् ।
नाहमीश्वर निराकरणीयस्तूररीकरणीयः ॥
विश्वनाथ विधुभूषितमौले वृषवरिष्ठपाळे ।
विश्ववन्द्य मम तावदशेषं विदलयाशु दोषम् ॥
कालहस्तिगिरिभासुरमूर्ते कल्पितकामपूर्ते ।
कालदर्पकपुरान्धकवैरिन् कलय शं शशिधारिन् ॥
उक्षवाह जगतीत्रयरक्ष त्र्यक्ष देव गरभक्ष ।
दक्षयज्ञहर कुन्दवलक्ष प्रेक्ष्य मां त्वमभिरक्ष ॥
वृद्धपर्वतदरीवरधामन् सिद्धवन्द्यनामन् ।
वृद्धमातनु सुखं यममर्दिन् शुद्ध हे कपर्दिन् ॥
अभ्रसंसदि नमामि लसन्तं शुभ्रदेहकान्तम् ।
बिभ्रतं करटिकृत्तिमनन्तं विभ्रमेण सन्तम् ॥ (१५)
श्वेतकाननिवासमनादिं भीतमन्मथादिम् ।
प्रीतमानसमनिन्दितभावे श्वेतराजि सेवे ॥ (१६)
अञ्च पञ्चनदनाथमनन्तं पञ्चसायकान्तम् ।
पर्वताधिपसुताकमनीयं शर्वमर्चनीयम ॥ (१७)
केकिरूपपरिभूषितगौरीपूजितोऽघहारी ।
नाकिवन्दितपदः सुखकारी स्यादनंगवैरी ॥ (१८)
अर्जुनेन सह शंकर युध्वाऽप्यर्जुनान्तरास्थाम् ।
अर्जुनांग कलयन्नवसि स्वानर्जुनारिमुख्यान् ॥ (१९)

शेषमस्तकमणिद्युतिपुञ्जच्छायया वनान्ते ।
भूषिते पुण्यमान्धकवैरिन् भासि घोषदेव्या ॥ (२०)

वाञ्छितार्थपरिपूर्तिकर श्रीवाञ्छ्यनाथ शंभो ।
खण्डितार्तिवन शूलधर श्रीकण्ठ पाहि मां त्वम् ॥ (२१)

शोभिताधिगण दिव्यगुण श्रीकापिलेशपुर्याम् ।
सुन्दरांग विलसन्कुरु लक्ष्मीं सुन्दरीसखस्त्वम् ॥ (२२)

आखिमाथिनमनादिमनन्तं व्याधिबोधिनन्तम् ।
हृद्यकारममलान्तरनीडे वैद्यनाथमीडे ॥ (२३)

आनमामृतघटेशमृमेशं व्योमकेशपाशम् ।
कालमाथनकृतावनिलीलं बालमौनिपालम् ॥ (२४)

पुण्यगेहकमलालयधामाऽगण्यकीर्तिभूमा ।
नागतो मम मनः शुचिधामा त्यागराजनामा ॥ (२५)

कुंभयोनिमुखमौनिमनाथं कुंभघोणनाथम् ।
मंगतं करुणयाऽर्च गिरीशं मंगलांबिकेशम् ॥ (२६)

नागनाथ नटनाथ दयाब्धे रोगभंगबुद्धे ।
वाहितोक्षवर निर्मलकीर्ते पाहि रम्यमूर्ते ॥ (२७)

भूतिभूषिततनुः सुखदर्या भाति बाणपुर्याम् ।
हेतिमण्डितकरः शुभचर्यां पाति शंभुरार्याम् ॥ (२८)

धातृवन्दितमपत्यसनाथं मातृभूतनाथम् ।
स्तोतृपुंस उदितं सुखनीडे दातृमुख्यमीडे ॥ (२९)

तीर्थलिंगमखिलाण्डबिनेत्र्या सार्धं मद्रिपुत्र्या ।
प्रार्थये शिवमनुग्रहबुद्धिं प्रार्थितार्थसिद्धिम् ॥ (३०)

सर्वदाऽऽदृतधनेशसुरेशश्रीशनन्दिकेश ।
पार्वतीश बृहतीश नमस्ते शर्व सुप्रशस्ते ॥ (३१)

चूतभूरुहतले विलसन्तं वीतशोकशान्तम् ।
कामवैरिणमुपाश्रय दान्तं कामकोटिकान्तम् ॥ (३२)

कच्छपेश्वरमगेश्वरधीरं स्वच्छसच्छरीरम् ।
ब्रह्मवन्दितमनिन्द्यमनीहं ब्रह्म मद्भजेऽहम् ॥ (३३)

श्रीविरिञ्चिपुरनाथ सनाथ श्रीनगेन्द्रपुत्र्या ।
श्रीशवन्द्यपद पाहि वलक्षश्लोक मार्गबन्धो ॥ (३४)

आदिपत्तननिकेतनयातं सुन्दरीसमेतम् ।
मोदिताखिलमुनीशमनीशं भावये महेशम् ॥ (३५)

आदधानमकलंकममोहं मोदमुक्षवाहम् ।
वेदशैलशिखरस्थमनीहं मादरं भजेऽहम् ॥ (३६)

ऊर्ध्वताण्डवकृतः शुभहेतोः दग्धमीनकेतोः ।
राजतो वटवने चरणाब्जे भावये हृदब्जे ॥ (३७)

वेल्लितामलजटं जगदीशं मल्लिकार्जुनेशम् ।
दक्षयज्ञहरमर्चय रक्षादक्षमुक्षकेतुम् ॥ (३८)

हाटकेशमुरगेशनिकेते रम्यरत्नदीप्ते ।
कैटभारिकमलासनयुक्तं चिन्तयेऽह्नि नक्तम् ॥ (३९)

भूविभूषणमवन्तिनिवेशं भूषयन्तमीशम् ।
कालिकारमणमर्च मनोज्ञं कालनाथसंज्ञम् ॥ (४०)

तारकेशशिरसं भुवनेशं तारकामयेशम् ।
व्योमकेशमनिशं भज नित्यं व्योमधाम्नि सत्यम् ॥ (४१)

श्रीमयूरपुरमाश्रितवन्तं कल्पवल्लिकान्तम् ।
भावये मनसि भव्यसनाथं श्रीकपालिनाथम् ॥ (४२)

नाकुजन्मनगरं श्रितवन्तं नाकिभिर्नितान्तम् ।
पूजितं नटनसुन्दरमूर्तिं पूजये सुकीर्तिम् ॥ (४३)

श्रीफलावृतवनान्तरगेहं श्रीतटिल्लितेहम् ।
श्रीदवन्दितपदं वृषवाहं श्रीदमर्चयेऽहम्॥ (४४)

यस्य योषिदचलैव सदास्ते श्रीतटिल्लिनाऽपि ।
श्रीफलावृतवनेऽस्ति स लक्ष्मीं सेवकाय दातुम् ॥ (४५)

ब्रह्मविष्णुकलहानपहन्तुं शैलरूपमाप्तम् ।
ज्योतिषामपि परं स्मर शोणं ज्योतिरन्तर त्वम् ॥ (४६)

त्वामपीतकुचया परिवीतं वीतशोकजातम् ।
जाततुल्यमविताश्रितलोकं लोकनाथमीडे ॥ (४७)

मीनकेतुदमनं भुवनेशं मीनलोचनेशम् ।
पीनसौख्यकृतमाश्रय सन्तं दीनमुद्धरन्तम् ॥ (४८)

उत्तरापथपतिं शुचिगात्रं वित्तराजमित्रम् ।
नक्तमह्नि च भजे प्रणतास्थं रक्तकाननस्थम् ॥ (४९)

दारुकाविपिनमध्यविहारी चारुरूपधारी ।
वित्तिमर्पयति मे पुरवैरी कृत्तिचर्मधारी ॥ (५०)

श्रीमदुत्तरमयूरपुरेशं श्रीविशालकेशम् ।
श्रीदमित्रमभिनौमि मनोज्ञं श्रीवदान्यमज्ञम् ॥ (५१)

अत्रिनेत्रजधरं भवदंगं श्रीत्रिकोटिलिंगम् ।
सुन्दरीभवुकमेव भजेऽहं नन्दनीयगेहम् ॥ (५२)

पूज्यशोणमणिरम्यकपर्दं प्राज्यभक्तहार्दम् ।
धारये हृदि सदा निरमित्रं नीरजाक्षमित्रम् ॥ (५३)

भावये पशुपतीश्वरलिंगं भावुकानुषंगम् ।
भूशतांगमृदुराजवरांगं भूतिभूषितांगम् ॥ (५४)

वल्लिकेशपितरुज्ज्वलधामन् मल्लिकेशनामन् ।
उल्लसत्पदपयोज भवन्तं ह्लपत्यनन्तम् ॥ (५५)

रामसेतुतटभूषण भूमन् रामनाथनामन् ।
पातु मां भव भवान् भवभीतेः हेतुभूत भूतेः ॥ (५६)

कान्तिमत्यधिप सज्जनसक्त क्षान्तिदान्तियुक्त ।
स्वान्तसद्मनि वसर्पभकेतो कान्तभूतिहेतो ॥ (५७)

फुल्लमल्लिसमसुन्दरदेहं पल्लवाटवीहम् ।
अक्षयाय भवुकाय भजेऽहं त्र्यक्षमुक्षवाहम् ॥ (५८)

चित्तधाम्नि शिवकारिणमाद्यं वृत्तसर्वहृद्यम् ।
आदरेण कलये परवेद्यं वेदमौलिवेद्यम् ॥ (५९)

जातरूपमयमंबरकेशं वातपत्तनेशम् ।
भक्तसौख्यकरमेष विधत्ते नक्तमह्नि चित्ते ॥ (६०)
जुह्वतं परुषरोपकृशानौ दक्षमृक्षशल्कम् ।
शामतं त्रिदशराशिमुपासे शर्वमस्तकल्कम् ॥ (६१)
देविकापुरमहेशमुमेशं देवतागणेशम् ।
भावये भवविमोचनरक्तैर्भाविनं विरक्तैः ॥ (६२)
श्रीशसेवितपदं धुनखेदं कल्पितप्रमोदम् ।
सानुकंपमयि कंपहरेशं संस्मरागजेशम् ॥ (६३)
व्योमकेशमभिराममहेशं गोप्रसूपुरेशम् ।
शृंगिणी जगति गाः कृतवन्तं चिन्तयाम्यनन्तम् ॥ (६४)
गोविमुक्तिपुरमध्यविहारी चलदलाधिकारी ।
गोसमुन्नतिकृदन्तकवैरी भवतु चित्तचारी ॥ (६५)
संस्मरामि रजताद्रिनिवासं चन्द्रकुन्दभासम् ।
सांब्रमूर्तिममलामलकीर्तिं कलितसौख्यपूर्तिम् ॥ (६६)

## अमृतघटेशस्तवः

वन्दे सुधाघटेशं वन्दितममरैर्विरिञ्चिविष्णुमुखैः ।
रक्षितवन्तं कालान्मार्कण्डेयं तपस्विधौरेयम् ॥ (१)

सुधाघटेशं प्रधानदेवं विधातृविधुमुख सुधाशनैर्हृदि विधारितांघ्रि वधाय भक्त प्रधानमुनिज कुधाऽऽगतस्या भिधारितास्वण्डधारशूला युधासिराजो मुधा यमस्यह दधारितसुर

प्रधानपूजन विधानरत्न स्य धारिताभय विधायिरूपं सुधानुकान्ति बुधाश्रयं श्रुतिविधायकं शुभ विधानसत्तम निधानमीशं विधारये हृदये क्षणमपि वृथा त्वहं न नये ।• (१)

कृपांबुराशिं विपाटितार्तिं क्षपाकरभरं विपापचेतनम मपारशक्तिं कपालपाणिम नपायमादृत विपाल्केतुवि धिपाकशासन मपायमोचन मपाम्नदुष्कुन मुपाम्यगुरगा धिपालमनुजा धिपामरगणा धिपालननिभिः क्षुपाल्यबलत न्नृपालगर्व क्षुपागनिदधी चिपावनमनो गपादकमलं मपार्वतीकमु रुपापमुक्तये मुपाश्रितमुनीशं शिवमह मुपाश्रये घटेशं । (२)

अनाथनाथं मनाथमुमया विनामपरवश विनायकभुज मनामरूपं घनाभकण्ठं जनार्तिचनमं जनान्तरंगम विनाशमीशं विनायकगुहा विनाकृतान्तिक मनाद्यविद्या विनाशनपटुं मनाविपमखं मनादनूपुर मनादिमजनिम शनायितविपं पनायितममत्यनायकप्रभृ तिनाकिभिः प्रथमनाख्यतोषित मनाननमुनिं विनाऽमृतघटेशं परमिह तु नाश्रयेऽन्यमीशम् ॥ (३)

## अभिरामीखड्गा

अभिरामीं शिवकामीं त्रिजगद्धात्रीं श्रितार्तिपरिहर्त्रीं ।
हृदि कलये ऽखिलकलयं कुप्यन्तीमर्चनेन तृप्यन्तीम् ॥

अजाण्डनाथे गजास्यमोद प्रजाधिपालन निजाङ्घ्रिभक्ते गजारियाने द्विजावलीवद नजातगंभी रजातमन्निग मजालघोपस

हजातितोषे निजांघ्रिसेवक रुजावलीभे षजायितंक्षे सुजातदीक्षा नुजातमहिमम नुजालिवर्या ग्रजातमुखमर सिजाभिजातं यजादि- मन्त्रे विजातरागे ऽभिजभगज प्रजावनार्थं त्यजाश्रितामियत्वं मम हृ दुव्रजाभिरामिके त्वम् ॥ (१)

चराचरगुरोऽभिरामि दिव्ये विराजमाने गिरां सुदूरे परात्परतरं पुरातनवचो भिरानुतपदे विराट्स्वरूपे ण राजमाने सुरासुरोरग नरालिपूज्ये परात्तताप जरामृतिहरे हरातिरागे निरामयं जग दिरादिमच्च सृ नरां कृतवति स्वरादिवासिनि परार्घ्यरूपे वरांगि मम स्वरात्तमोदे परात्ममाये विराज मे हृदि त्वं वह शु गिवरामकार्यकृत्त्वम ॥ (२)

भयार्तिहारिणि जयादिकारिणि दयानिधे ऽशुभ धिया- मदूरे धियाऽऽविराभा मयांगलतिके वियातजनदु ष्प्रयासकृतिम क्षयागतात्यप नयालिपाटन य्यावह मति मयाभिचारिसु धियां सदापा श्रयायिततरे शयांबुजात्ता भयाख्यमुद्रे सुयागसेवा प्रयाभिविधिमं शयापहारि ण्ययानुयायिनि जयाभिराम्ययि मयाच तव चि नयान्वितेन भाव्यं मदवन धिया त्वया चभाव्यम् ॥

---

## आपदुद्धारमन्त्रद्वयरामस्तुतिः

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥

आपदामनिशमापतितानामद्रिसारसमभावमितानाम् ।
पाटने पटुतमः पविरास्तां राम तावककटाक्षविशेषः ॥ (१)

पक्षिराड्भवतु पन्नगतुल्यामापदालिमतिभीतिकृतं मे ।
शेषलेशरहितामयि कर्तुं राम तावककटाक्षविशेषः (२)

दावपावकशिखाभरकल्पं मामकाधिनिकुरुंबमनन्द्रम् ।
शान्तमारचयितुं जलदः स्यात् राम तावककटाक्षविशेषः (३)

मन्त्रितं श्रुतिगणैः स्मृतियुग्मं ज्ञानकर्मविशदीकरणाढ्यम् ।
आश्रितान् रचयतं भृशमस्मान् राम तावककटाक्षविशेषः (४)

पर्याकुलं भवपयोनिधिमध्यमग्नं
कामादिदुष्टजलजन्तुनिपीडितांगम् ।
सन्तार्य मां सुखयितुं तरितल्लजोऽस्तु
श्रीराम तावककटाक्षविशेष एषः ॥ (५)

हर्षातिरेकपरिपूरितवक्त्रबिंबाः
सन्त्यक्तशत्रुनिवहा बहिरन्तरे च ।
दृष्ट्या पुनन्ति भुवनं यदमी महान्तः
श्रीराम तावककटाक्षविशेष एषः ॥ (६)

तावकं जगति नाम नरा ये चक्षते पुलककञ्चुकितांगाः ।
तेऽधिगन्तुमलमन्यदुरापान् राम तावककटाक्षविशेषान् ॥ (७)

रंरम्यते यमिजनः स्ववशेन्द्रियौघः
संत्यक्तबाह्यविषयः स्तिमितान्तरंगः ।

आत्मन्यमन्यमननः सति चिन्मये यत्
श्रीराम तावककटाक्षविशेष एषः ॥ (८)

दानं दया दम इति त्रयमेव लोके
श्रेयोनिदानमिति नृन्दनुजान् सुरांश्च ।
उद्दिश्य पङ्कजभुवा कथितं तदेतत्
श्रीराम तावककटाक्षविशेष लभ्यम् (९)

ताटकेयदवदावकृशानो ताटकादनशिखाम्नतयित्नो ।
तारकं न परमस्ति जगत्यां तावकीनशुभनाम विहाय ॥ (१०)

रंहसा रचय राघव राज्ञां सन्धिकर्म सह साधनमार्थैः ।
संकटस्य सकलस्य समित्या संगतस्य सनिमित्तनिवृत्त्यै ॥ (११)

सर्वलोकपरिपालनकर्मण्यस्ततन्द्र मुखनिर्जितचन्द्र ।
सर्वभूतसमदृष्टिरलभ्या राम तावककृपारहितेन ॥ (१२)

वक्तता च वितथेतरवाचां नित्यवश्यसकलेन्द्रियता च ।
बोद्धृता च परतत्त्वमहिम्नां राघवस्य कृपयैव भवन्ति ॥ (१३)

संसृतिसिन्धुं तरितुं रघुपतिचरणाब्जनावमुज्झित्वा ।
नान्यत्साधनमस्मिन्कुटिले कलिजालकलिलकलिकाले ॥ (१४)

परात्परं यत्परिपूर्णरूपं अणोरणीयो महतो महीयः ।
सच्चित्सुखाकारमनन्तमेकं तद्वस्तु रामाभिधमग्रतोऽस्तु ॥ (१५)

दांपत्यं परमं सुतांश्च महितान्कायं च मुक्तामयं
संपूर्णं द्रविणं गृहाणि रुचिराण्युच्चावचं धैनुकम् ।

ज्ञातीन्याजकयाज्यबन्धुसुहृदः शिष्यांश्च धर्मोत्तरान्
पुंसां राघव तावकीनकरुणा पुष्णाति पुण्यात्मनाम् ॥(१६)
लोकसौख्यमुरुसाधनमल्पं नश्वरं रघुपते न लषन्ति ।
ज्ञानसाधनमुरु क्षयहीनं तद्गता इव सुखं त्वदुपघ्नाः ॥ (१७)
कारामयं संसृतिबन्धमेते त्वदीयपादांबुरुहावलंबाः ।
छित्वा रघूत्तम विमुक्तलक्ष्मीस्वयंग्रहाश्लेषसुखं लभन्ते ॥(१८)
भियं च पापाज्जगतो ह्रियं च हित्वा जनाः कर्म तदाचरन्ति ।
यद्रोचते स्वीयधियेऽत्र हेतुर्वैमुख्यमर्चासु रघूत्तमस्य ॥ (१९)
रामः पातु ममेधि राम निकटे रामं भजाम्यन्वहम्
रामेण क्रियतेऽखिलं जगदिदं रामाय कुर्वे नमः ।
रामात् किंचन नान्यदस्ति निखिला रामस्य दासा जनाः
रामे ब्रह्मणि मानसं मम परे सच्चित्सुखे वर्तताम् ॥ (२०)
मंस्यते मतिरियं मम यत्तत्सेत्स्यति त्वयि मत न शंका ।
ग्रावकंककरटप्रियकृन्मे वस्तु तिष्ठति परं ह्यविचित्तम् ॥ (२१)
श्रीदीनाय रघूत्तम प्रभवति श्रद्धादिभि र्भूषितै-
रिष्टापूर्तमुखेषु कर्मसु सतां त्वत्पादसेवाजुषाम् ।
अन्यास्वासु जुगुप्सितास्वतितरां दुर्द्यूतपानादिषु
श्रीस्त्वद्भक्तिविवर्जितैःकुकृतिषु स्वच्छन्दतस्त्यज्यते ॥ (२२)
राज्यं प्राज्यमपीतरैर्नृपतिभिर्निष्कारणं त्याज्यते
वाणिज्ये नृपभीतिरस्ति तु बलैर्नैयत्यराहित्यतः ।

कृष्यां कालसुवृष्ट्यभाववशतो नैवास्ति सम्यक्फलं
सर्वस्यास्य रघूत्तमांघ्रिभजनेऽनास्थैव हेतुः परः ॥ (२३)

मंजुशिञ्जितमनोज्ञमणिस्रिग्मैथ्यमानमकुटादिविभूष ।
आसने स्थित मृगाधिपचिह्न राघव त्वयि मदीयमनोऽस्तु ॥

भूतिः परा परमखण्डसुखं मुमुक्षोः
यां प्राप्य संसृतिनिशा सततप्रभाता ।
तां प्राप्तुमत्र रघुनाथपदाब्जसेवा
साम्राज्यमेव नितरां परिपालनीयम् ॥ (२५)

योगेन सांख्येन विचारभक्तिसत्कर्मभिर्वा सदुपासनाभिः ।
साक्षात्क्रमात्मुक्तिरवाप्यतेऽत्र श्रीरामभक्तिं सुगमां स्मरामः ॥

भूतिर्गोपीचन्दनं वा ललाटे रुद्राक्षस्रक्कण्ठदेशे जपस्रक् ।
पाणौ वक्त्रे रामनामेतदंग सर्वं पूर्वं मुक्तिकन्याविवाहे ॥ (२७)

योगया रज्जुः कामकर्मादिशाखे मोहारण्ये धावमानं समन्तात् ।
चेतः कीशं चञ्चलं साधु बन्धुं श्रीराम त्वत्पादपाथोजभक्तिः ॥

नन्दन्ति वेदोदितकर्म केचिन्निन्दन्ति तत्केचिदिहोभयेषाम् ।
तुष्ट्यै रघूत्तमपदारविन्दभक्तिं परामेव समाश्रयामः ॥ (२९)

मायामशुद्धामनितं नदीये कार्ये ऽनृते सत्यधियं विहन्तुम् ।
ज्ञातुं च तत्त्वं परसौख्यमाप्तुं अलं नृणां राघवभक्तिरेका ॥

स्थयोर्द्वयोः सर्वगुरुर्यथा सः तथा भवान राघव सर्वगोऽतत् ।
यस्यैव लोकस्य यदादिवर्णलघुत्वमेतत्त्वदहाणिमूलम् ॥ (३१)

माम् ह्मलय माऽम्ब तृष्णे रूपरसादिषु विमोह्य विषयेषु
रघुवरपदपद्मयुगे परवशमानसमनन्यचित्तामतः ॥ (३२)

यत्त्वदंघ्रिसरसीरुहपद्मे भृंगकायितमनेन हृदा मे।
दातुमर्हति भवानिदमेव श्रीविदेहसुतयोऽस्तु क राम ॥ (३३)

हंसः परात्मा प्रतिदेहमास्ते न वेद्मि तं निच्युपरि स्थितोऽपि।
निधिं न वेत्त्यत्र वृतिर्हि हेतुः वृतिं त्वमुन्मूलय रामचन्द्र ॥

आपदामितिमनुस्थितवर्णान् आदितः क्रमत एव गृहीत्वा।
रामचंद्रनुतिराकल्तितेयं मंगलं वितनुतामुरु मद्वचः ॥ (३५)

---

## द्वादशाक्षरीमन्त्रेड्यवासुदेवस्तुतिः

ओंनमो भगवते वासुदेवाय

ओमिति श्रुतिशतेडितमन्त्रे त्वत्प्रतीकमहिते प्रतिमावन्।
सन्निवेश्य हृदयं शमवित्ताः स्याम माधव कदा ममचित्ताः ॥

नन्दनीयगुणबृन्द मुकुन्द स्मेरवक्त्र नवनीरदगात्र।
वन्दनं तव पदांबुजयुग्मे कुर्वतां जगति किन्नु दुरापम ॥ (२)

मोक्षमिच्छुभिरहो वृषमित्रैः जारताद्यपगुणान्विजहद्भिः।
कृष्ण दामसितदेह वृपार्त जारचोरमणिराद्रियसे त्वम् ॥ (३)

भक्तिरच्युतपदांबुजयुग्मे गाढमन्धतमसं विनिवर्त्य।
सत्प्रकाशमधिकं जनयन्ती चन्द्रिकेव मुदमाशु तनोति ॥ (४)

गत्यन्तरं जगति नैव विहाय कृष्ण त्वत्पादपंकजसमर्चनमत्र काले।
वर्णाश्रमादिविहिताचरणादिदरे निष्ठीवकार्दचरितैर्निमानमान्ते।

वन्यानि कन्दफलमूलमुखानि भक्षन्
भोज्यानि पुण्यसरिदाप्लवपूतगात्रः ।
त्वन्नामकीर्तनविधूतकलिः स्वतन्त्रः
कालं कदा कमलनेत्र सुखेन नेष्ये ॥ (६)

ते वन्दनीयविभवाः सततं निषेव्याः
सन्तः सदाचरणपद्धतिदर्शकाश्च ।
ये पंकजेक्षण तवांघ्रिसरोजयुग्म
ध्यानावधूतकलिकल्पितकल्मषौघाः ॥ (७)

वारांगनारमणलंपटभूभुजो वा
चौर्याद्यसंचरणकर्मठदेशिका वा ।
ये तावकीनपदपंकजभक्तिभाजः
ते कृष्ण मुक्तिललनावरदास्यभाजः ॥ (८)

सुख्यन्ति केचिद्भुवनेषु केचिद्दुःख्यन्ति तत्र प्रथमस्य हेतुः ।
कृष्ण त्वदर्चा चरमस्य हेतुः त्वदीयपादार्चनवैपरीत्यम् ॥ (९)

देहि माधव विमुक्तिमितीयं वागुदेति विशयोऽस्ति न तत्र ।
नश्वराण्यसुलभान्यपि वस्तून्याप्तुमिच्छति मनस्तु मदीयम् ॥

वासुदेव वसु वाञ्छति वित्तं नाकतु सूनुसमुदारसखेषु ।
जातु वस्तुषु तृषा न विधेयेत्यन्यतोभवनविधानसमर्था ॥ (११)

यज्ञो दानं तप इति परं श्रेयसां मूलमेतत्
नित्यं कार्यं त्रितयमिति पुनः कामक्रोधाद्यरीन्द्राः ।

एते त्याज्या इति च भगवानूचिवानर्जुनाय
त्याज्यं दम्भो बत वयममी संत्यजामश्च कार्यम्॥(१२)
द्वादशाक्षरमनुस्थितवर्णानादितः क्रमत एव गृहीत्वा ।
वासुदेवनुतिरागचितेयं सौख्यमाकलयतामुरु सद्वचः ॥

## रामाष्टकम्

आताम्रपाणितल भीताश्रिताभयद सीताननांबुजरवे
शीतांशुतुल्यमुख वातात्मजादिहित भूतानुकंप भगवन् ।
पातालसद्युवतिगीनापदानगुणजातांघ्रिपंकजयुगीं
यातान्द्रुतं शरणमेतानुदार तव पाताद्विनम्रशिरसः ॥ (१)
राजाधिराजनुत पूजादरेषु सुरभूजातिसुन्दरतनो
*गोजातवायुमखभाजालमध्यतललाजायिताशरपते ।
आजानुलंबिलसदोजायमानभुज बीजाखिलस्य जगतः
श्रीजानकीरमण नो जातु दुःखजनिराजायतां मम विभो ॥
पापाटवीदहन तापानलालिघन रोपावलीशिखिशिखा
व्यापादिताशरप रूपाभिभूतसुमचापाखिलक्षितिपते ।
आपाटलांघ्रिमणिसोपानमध्यगतभूपालशेखरनटी
व्यापार सूरकुलदीपामलाभ मम धूपाय शोकपटलीम्॥ (३)
सोमाभिराममुख सीमातिगामिदय कामातिसुन्दरतनो
क्षेमास्पदांघ्रियुगधामानतार्तजनसामाभिकल्पनरते ।

---

*[व्या-गोजातं=बाणसमूहः]      =रोपा बाणाः

श्यामांबुदाभिनिभ वामावनंममणिभूमातृकाभव विभो
रामारियातुकुलभीमाबमग्नमव मामापदंबुधिजंग ॥ (४)
गंगाधर प्रमुखतुंगामरालिमुखभृंगाग्रनियर्दाभवा
गंगाप्रवाहहृदमंगांच्छमद्भूदयंगाविभामिचरणम् ।
शृंगारहेतुरुचिभंगानिपाटवभृदंगाभिगामसुखमं
तं गाय दाशरथिमंगान्तरंगनिभमंगान्यथा क्व नु सुखम् ॥
वृन्दारकादिनुत वन्दारुलोकनिमन्दार गावत्र विभो
कुन्दावदातरद सुन्दारमजादिनगभिन्दानमार्गणपत्र ।
निन्दास्तुतीह भवमन्दानगाहमितनिन्दानमोचनमहा
नन्दाखिलेश तव निन्दामहेऽपिमभिवन्दामहेऽपि च कदा ॥
रक्षांसि शिक्षितवदक्षाग्निभिर्विनवदुक्षाथिरूढवदृशा
दीक्षायुतं विबुधरक्षाम् मान्द्रकरुणेक्षावनामचरमम् ।
द्राक्षामदक्षरुचिरक्षार्हगममनुमाक्षादुपयविभवं
साक्षात्क्व वस्तु परमीक्षार्हमच्चमुखभिक्षावतो मम भवेत् ॥
देवादिदेवमनुभावादिरम्यगुणमावाग्निर्निनिचय
सेवावनं मननमेवानुकूलमनिमाचालगोर्पविदिनम ।
नीवारमूलफलसेवावदग्र्यकुलभावान्निकस्थितिजुषं
नैवाशरारिमनुधावामि साधुनमभावान्वितेन मनसा ॥ (८)

## सीताष्टकम्

माता समस्तजगतां ध्याता त्रिदशैर्दयासोपेता ।
जाताऽवन्याः वनिता श्रीतारब्रह्मणोऽवतात्सीता (१)

यातुकुलधूमकेतो सेतुनिबन्धनवरिष्ठतमहेतो ।
नेतुरपि सुकृतकेतो पातु भवत्यंब भुवनजीवातो ॥ (२)

कारणभूतां जगतां तारणनौकां भयांबुधेर्भजताम् ।
चारणनुतगुणजातां वारणकुंभस्तनां भजे सीताम् ॥ (३)

दशरथतनयप्रियया दशमुखमर्दननिदाननिगदितया ।
अशरणरक्षणचणया सशरणमखिलं कयापि देवतया ॥ (४)

कस्यै चिदपि परस्यै तस्यै मध्ये नमस्तनीयस्यै ।
यस्यै स्पृहयति शस्यैः रस्यैः रामो गुणैर्महीयस्यै ॥ (५)

तृणगणितयातुधानात् गुणमणिनिकुरंबकेलिकाभवनात् ।
घृणया पालितभुवनात् गणये नान्यद्विदेहविभुजननात् ॥ (६)

अतनुदयाभरितस्य प्रतनुवलग्नस्य हृदयलग्नस्य ।
सुतनुमणेः सुकृतस्य प्रतनुमहेऽर्चां प्रहृष्टरामस्य ॥ (७)

गलरवजितवीणायां कलभवरोर्वां कलाप्रवीणायाम् ।
विदलितयातुगणायां विदधे चित्तं क्वचिच्च करुणायाम् ॥ (८)

प्रथमां सकलस्त्रीणां प्रथमादिविभक्तिरीतिमनुसृत्य ।
नारायणकविरष्टभिराराधयति स्म जानकीं पद्यैः ॥ (९)

## नटेशाष्टकम्

मञ्जीरीकृतशेषं तूणीरीकृतपयोधिमुरुभूषम् ।
ऊरीकृतनतपोषं गौरीनाथं नमामि नटवेषम् ॥ (१)

दिविषत्परिषज्जयिचित्परिषद्विलसद्वरत्नसदैव मनः ।
दिविषन्नुतसद्गुणमुन्निमिषज्जलरुट्पदकपदस्ति महः ॥ (२)

बृन्दारकगणपूजितमन्दारादिप्रसूनचुमुचुमितम् ।
वन्दे नटेशचरणं सुन्दरमञ्जीरमधुरचुणचुणितम् ॥ (३)
कलिमलतरलितमनसः शरणं शरण समस्तभद्रस्य ।
परिमिलदगलितमहसश्चरणं शरणं भजे नटेशस्य ॥ (४)
हिण्डनमुरुणा कलयन्मण्डनमेणांकखण्डनस्तन्वन् ।
तुण्डनमार्तेः कुर्वन् चण्डीश कदा प्रदृश्यसे भगवन् ॥ (५)
समुदञ्चितकुञ्चितपदमस्चितोऽपीश पञ्चबाणारे ।
अञ्चनमकिञ्चनानामकुञ्चितं मञ्चिनोपि पञ्चास्य ॥ (६)
विभ्रममदभ्रमभ्रे शुभ्रतनो शिव तवास्य नृत्तस्य ।
भणितुं केवा निपुणाः भणिपतिरनलं यदेष शेषोऽपि ॥ (७)
निर्गुणसगुणविभेदाच्चिल्लारण्ये तथा सितारण्ये ।
नृत्तप्रवर्तकाय द्वेधा बहुधा नमः शिवायास्तु ॥ (८)
गौरारण्यनिवासी नारायणकविरवर्णयत्पद्यैः ।
अष्टभिरगेन्द्रजायाः इष्टं भक्तेष्टदं नटश्रेष्ठम् ॥ (९)

## गणेशाष्टकम्

कारुण्योल्लासभाम्ने कलितकविवचस्तुगवार्तामहिम्ने
कामारिप्रेमदाम्ने करटतटगलद्दानधारागरिम्णे ।
विस्तीर्णाभाप्रथिम्ने विबुधगणशिरोभासुरांघ्र्यब्जसीम्ने
विघ्नाधीशाननाम्ने विदलितविपदे व्यानताः स्याम भूम्ने ॥
सन्तप्तानां स्वपादस्थलमविषमुपासर्पतां सौख्यदायी
सर्वैः सन्तोषसान्द्रैः श्रुतिमधुररवैः सद्द्विजैः सेव्यमानः ।

सानन्दैश्चञ्चरीकैर्मदरसलहरीपुष्पमाध्वीकधारा
संभ्रान्तैः संवृतोऽसौ गजमुखविटपी तापहारी ममास्ताम् ॥
हंसैर्हंसैः शुभांगैः पदकमलवनीसंविहारानुषंगैः
सिन्दूरैर्मेदुरैस्तैररुणिममसृणैः सर्वतः सत्परागैः ।
रम्यैः सौधाकरीभी रुचिभिरिव पुनर्दन्तराजीवकन्दैः
प्राचीनं दन्तिरत्नं मरडत परमं शान्तिदं मेऽस्तु नित्यम् ॥
नीरन्ध्रं निस्सरद्भिर्निरवधिमधुरैर्दानधाराप्रवाहैः
नित्यार्द्रीभूतदोष्यन्निजपरमकरस्तृप्तबुद्धिं सदालिम् ।
निर्व्याजं कारयंश्च प्रमुदितविबुधैः सेवितोऽसौ नितान्तं
निस्तारायापदां मे करिवदनमहाचक्रवर्ती चकास्तु ॥ (४)
शाखाप्रान्ते लसन्ती प्रमुदितभुवनान्याशु विस्तारयन्ती
सम्यक्सन्तन्वती प्रागुदयविशदतां संहरन्ती तमांसि ।
निस्तन्द्रं बोधयन्ती सकलसुमनसः कुंकुमानां जयन्ती
कान्तिं कान्ता गजास्यद्युतिरनुकुरुतं पूर्वसन्ध्याविभूतिम् ॥
गौरीसंबन्धयुक्ता शशिधरमकुटे लालिता रम्यकीर्तिः
क्ष्माभृद्राजप्रकामप्रकटितविभवा नागरागैः समन्तात् ।
अश्रान्तं राजमाना चलपरमकरा तीर्थरूपाधिषेव्या
श्रुत्यन्तायातमूर्तिः सुरसरिदवताद्वालहेरंबसंज्ञा ॥ (६)
अभ्रान्तभ्राजमानः कुवलयहितकृच्छंभुना लालनीयः
खाटीनां सत्ततीनामधिपतिरनिशं सर्वसन्तापहारी ।

दुर्दान्तध्वान्तहन्ता निखिलनतचकोरावने बद्धदीक्षः
स्थाने श्रीमत्कलानां गजवदनशशी राजतां मे पुरस्तात् ॥

आधारं शेवधीनां परिवृतममरैः स्वर्गमाधारणैः श्री-
मेधामन्यप्रमोदप्रमुखगुणगणैर्विष्टपाधारशक्तिम् ।
बोधाकारं गुरूणां गुरुमुपनिषदां क्रीडनाधानमन्तः
मौधान्तस्थं श्रितानां नमत गणपतिं विघ्नयूथाधिनाथम् ॥

## कृष्णाष्टकम्

रुक्मिण्यधिनिवर्तक रुक्मिवलेपाद्रिभेगशतकोटे ।
परिहृत्याखिलकृच्छ्रं परिपूरय कृष्ण चिन्तितं त्वरितम् ॥ (१)

कृष्ण कृष्णामहाभीलदावानलघनाघन ।
मुष्णन्निखिलकष्टानि पुष्णन्निष्टानि मे भव ॥ (२)

अमल पांसुलपांसुलकंसमहासुरपलालवातूल ।
यदुकुलवतंस वत्सल परिपूरय कृष्ण मन्मनोभीष्टम् ॥ (३)

मेघश्यामल मञ्जुलमुखकमल त्वामुरोलसत्कमलम् ।
स्मरतां कृष्ण स्वामिन् दरमपि न हि जातु दरमुदीतेऽहम् ॥

रिपुकुलभीमं कामं यदुकुलसोमं नवांबुदश्यामम् ।
सोमाभिरामवदनं स्मरतां कृष्णं न हीषदप्यापत् ॥ (५)

अहो कृष्ण कर्णामृतस्य त्वदीय
श्रवस्स्वादुपीयूषसारस्य भूतिः ।
विचित्रा यतः सा करोति श्रितान्नः
सतृष्णान्वितृष्णान्वितृष्णान्सतृष्णान् ॥ (६)

त्वच्चारित्रमरन्दस्वादमदोन्मत्तमानसाः कृष्ण ।
नापि लषन्त्यपवर्गं सन्तः सन्त्यक्तसकलरिपुवर्गाः ॥ (७)

कंसाद्युतपांसुलाचलभरादत्यन्तखिन्नां मही-
मुद्वीक्ष्यातिकृपावशाद्यदुकुले श्लाघ्येऽवतीर्य द्रुतम् ।
शिष्टान्पालयति स्म तत्परतया दुष्टानमृद्नाच्च यः
कृष्णः स प्रथितप्रथः श्रितगतिर्मच्चिन्तितं पूरयेत् ॥ (८)

## नरसिंहाष्टकम्

हरिहरि नरहरिरूपं हरिमहमस्मार्षमिह न जातु ततः ।
आधिव्याधिसहस्रं जनिरियमयते भृशं प्रकृष्टाऽपि ॥ (१)

प्रह्लादमह्लादयत प्रभुर्यः स्तंभं च वक्षश्च रिपोर्विभिन्दन् ।
नृरूपसंमिश्रमृगेन्द्ररूपं बिभ्रत्स भूयादशुभापहारी ॥ (२)

नृसिंह भक्तार्तिविभंगचुञ्चो मदीयकृत्यादिसमस्तभारः ।
समर्पितस्त्वत्पदपद्मयुग्मे प्रदर्शयातः श्रितवत्सलत्वम् ॥ (३)

नरकण्ठीरव कुण्ठीकृतदनुतनयेन्द्रदुरवलेपभर ।
अपनुद मन्मानसगतमाधिं कायाधवप्रिय स्वामिन् ॥ (४)

भव भवपाथोराशावामज्यात्यन्तखिन्नमनसो मे ।
दत्वा करावलंबनमुद्धृतिकृत्यां नृसिंह सुखदायी ॥ (५)

लक्ष्मीनृसिंह लयसंभवहीन लोक-
सृष्टिस्थितिप्रलयकारण विश्वमूर्ते ।

आधिं निवार्य निखिलं मम सर्वयोग
क्षेमादिकं घटय रम्यसमृद्धियुक्तम् ॥ (६)

लक्ष्मीनृसिंह तव पादसरोजयुग्म-
भक्तिर्जगत्यखिलकामदुघेति सन्तः ।
संचक्षते तदहमात्ममनोरथाप्त्यै
तां भक्तिमादरभरेण विभृत्य वन्दे ॥ (७)

कष्टं कायाधवस्येव कयापि विनया विभो ।
निवार्य पूरय त्वं मे नरसिंह मनोरथम् ॥ (८)

## पंचदशाक्षरीमन्त्रघटितदेवीस्तुतिः

कल्याणीं कमलासनादिविनुतां कल्पद्रुमूले स्थितां
काश्मीरस्तवकारुणां कलिमुषं कारुण्यवीचीजुषम् ।
कन्दर्पायुतकम्रकायसुषमां कल्पावलीसाक्षिणीं
कालारातिकुटुंबिनीं कविमनश्शालाविलासां भजे ॥ (१)

एणांकावलिभासमानवदनामेणायमानेक्षणां
एकानन्दविधायिनीं शमजुषामेकान्तानिष्ठाजुषाम् ।
एष्यत्संचितवर्तमानदुरितप्रध्वंसिनीं ध्यायतां
एकाम्रेकरमालपालमहिलामेतेन ध्यायं मनः ॥ (२)

ईहाकल्पितरक्षिताहृतजगत्सन्तानमीहामुचां
ईड्यामीप्सितदानशौण्डहृदयामीशांकसौधाश्रिताम् ।
ईतिप्सातिसमुत्थकीर्तिमहितामीषत्स्मितन्यस्तिकां
ईशत्वाच्युतताजतादिपददामीहा ममास्तीक्षितुम् ॥ (३)

लक्ष्मीनाथसरस्वतीपतिमुखैर्बर्हिर्मुखैर्लक्षितां
लाक्षारंजनलांछितांघ्रिकमलां लावण्यसारान्विताम् ।
लक्ष्यालक्ष्यसमस्तविष्टपनिधिं लभ्यां दृढाभक्तिभिः
लक्ष्यीकर्तुमिदं मदीयहृदयं लब्धेच्छमास्तेऽम्बिकाम् ॥ (४)

ह्रींकारान्वितमन्त्रराजविनुतां ह्रस्वावलग्नस्थलां
ह्रीसंशोभिकुलांगनाजनवृतां ह्रासानुषंगोज्झिताम् ।
ह्रीणीभूतवनप्रियस्वरयुतां ह्लादिन्यभिख्योज्वलाम्
हृद्यां शोणविलेपभूषणसुमैर्हृद्यंबिकां भावये ॥ (५)

हस्तांभोजतलैः शरासनशरौ पाशांकुशौ बिभ्रतीं
हर्षज्योत्स्निकया विराजदधरां हर्यक्षवाहस्थिताम् ।
हार्दालोकितसेवकां हरिहरब्रह्मादिभिः सेवितां
हारैर्हारिकुचां हठार्दितगदां हस्त्याननांबां भजे ॥ (६)

सच्चित्सौख्यघनं समन्दहसितं संपादयन्तं सुखं
सद्भ्यः सांकुशपाशचापविशिखं सान्द्रारुणालेपनम् ।
संख्यातीतमनोज्ञसद्गुणझरीकल्लोलसन्दानितं
सर्वप्रेमसमुच्चयं शशिभृतः स्वान्ते दधे सादरम् ॥ (७)

कल्हारैररुणैः कृतां सुरभिभिः कण्ठे स्रजं बध्नतीं
कम्रैः शोणमणीगणैः कवचितां कौसुंभरागांबराम् ।
काश्मीरुद्रवसारकल्पितनवालेपेन धिक्कुर्वतीं
कल्याभ्रप्रसरद्युतिं कवयतां कल्पद्रुमीडे शिवाम् ॥ (८)

हत्याद्युद्भटपाप्मनां हरति या स्तोमं हठात्संस्मृता
हारे हल्लकपुष्पतल्लजकृते हार्दं बिभर्ति च या ।
हस्तैरङ्कुशपाशचापविशिखाः हामञ्च यस्या मुखे
हाहाहावविभावहार्यहृदया हन्त्वापदं सा शिवा ॥ (९)

लभ्या सज्जनसन्ततेर्ललितता पात्रं लतापेशला
लावण्याम्बुनिधिर्लसल्लकुचश्रीसन्तायिवक्षोरुहा ।
लक्ष्मीब्रह्मकुटुम्बिनीपरिवृता लम्बोदरलालना-
लब्धीलास्यकलाविनोदनवती लभ्या भवत्वम्बिका ॥ (१०)

ह्रींकाराभिधरत्नहर्म्यविलसत्केकावती पार्वती
ह्लादिन्यापदगावलेर्हिमवतो भाग्यहृदः पावनः ।
हव्यं हव्यभुजां हृषीकजयिनां हृद्यः प्रमोदाम्बुधिः
ह्लादिन्यस्थिरभावमुज्झितवती हार्दाभगा पातु माम् ॥(११)

सज्जां सज्जनसंचयार्तिदलने सौदामनीसन्निभां
सर्गस्थित्युपसंहृतिप्रनलसां संजग्मुरां तन्युपाम् ।
सद्यः संसृतिसागरान्तरसदां सन्तारमभ्यक्तरि
संवित्सौख्यमयीं सदा हृदि दधे सर्वेश्वरप्रेयसीम् ॥ (१२)

कस्तूरीतिलकालिकां कचगलत्काडंबिनीडंबरां
काश्मीरद्रवलिप्तकर्कशकुचां कल्हारमालाधराम् ।
कावेरीतटिनीवृतां करिवनीमासेदुषीं शेमुषी
कर्णालंकृतिरम्यचक्रविभवां कालीं ममालंबताम् ॥ (१३)

लंबारक्तलसन्तिकां लपनभालालित्यलोलांबुजां
लभ्यालभ्यसुखासुखां लघुलघुण्यालूनभक्तापदम् ।
लक्ष्मीनाथमुखैर्ललामविबुधैर्लब्धालयात्मास्पदां
लग्नामम्मथशंकरे हृदि दधे लंबोदराम्यांबिकाम्॥ (१४)
ह्रींमन्त्रेश्वरजापिनो हरिहयप्रष्ठाः सुरा यद्दृशां
हार्दासारतरंगितासु सरणिषुक्लेशमेत्रासते ।
हार्दाकाशमनोहरांबरकुटीराज्ञी हरप्रेयसी
हट्टे वेदशिरस्यनर्घमणिराट् हर्षं विधत्तां ध्रुवम् ॥ (१५)
श्रीमत्पञ्चदशाक्षरीमनुमहाराजाश्रितान्यक्षरा-
ण्यादाय क्रमतः कृतां नुतिमिमां देवीपदांभोजयोः ।
भक्तेनारचितां जगद्गुरुवरैः मंश्लाघितामन्वहं
सामोदं पठतां नृणां वितनुतां सा मोदमेवांबिका ॥ (१६)

## देवीपादादिकेशान्तवर्णनम्

अंब त्वत्पदसुषमासदृशीं सुषमामवाप्तुमंभोजम् ।
अंभसि मधुकरकैतवधूमपमधिकं तपस्तनोतीव ॥ (१)
अगपतितनये तावकजंघान्तेवासिभावमासाद्य ।
आद्रियते विद्वद्भिस्तौर्यत्रिकवेदिसदसि काहलिका ॥ (२)
वारणबुसाविशेषाः वारणशुण्डाश्च साम्यमीषदपि ।
ऊर्वोरद्रिकुमारि त्वदीययोरनलमधिगन्तुम् ॥ (३)
सैकतसदृशं कवयः त्वदवयवेषुव वर्णयन्त्येकम् ।
स्थाने लावण्यनदी तेषुप्रवहतितरां यतो हेतोः ॥ (४)

अणुमध्यमोत्तमेष्वपि परिमाणेष्वंब पारिमाण्डिल्यम् ।
अवलग्नं भवदीयं गगनतलं चापि नेति दृश्यन्त्वम् ॥ (५)

अंब नवांगलतायां गुच्छौ प्रवहन्त्युत त्वदंगेषु ।
लावण्यझरे सक्तौ चक्रौ स्यातां न वक्षोजौ ॥ (६)

अंब त्वद्भुजलतिकास्वंगुलिपल्लवमनल्लिकास्वन्तः ।
रत्नांगुलीयकानि प्राज्यान्युच्चावचानि कुसुमानि ॥ (७)

अंब भयन् त्वत्स्तन्यं शैवं मत्वा गलं कुमारस्ते ।
लीढे तं प्रकृतिरियं डिंभानां चपकगंधलोटिर्हि ॥ (८)

कुलगिरितनये तावकदशनतटी दन्तकान्तिविच्छुरिता ।
मौक्तिकतल्लजसुषमास्वचितां विद्रुमलतामधः कुरुते ॥ (९)

त्वत्पतिमहाट्टहासः सकलजगद्भस्मसाद्विवर्त्त यः ।
मन्दस्मितेन सुन्दरि तमपि ज्योत्स्नासमानमातनुषे ॥ (१०)

त्वन्मुखमकलंकमिदं राकाशशभृद्विभाति सकलंकः ।
तत्त्वन्मुखसमवस्तु त्रिजगत्स्वत्यन्तदुर्लभं मन्ये ॥ (११)

शैलतनूजे तावकलोचनसमतामवाप्तुकामेव ।
आमज्ज्य शफरसंहतिरगाधसलिले तपस्तपति ॥ (१२)

अंब त्वद्भ्रूदृष्ट्या धनुषः सृष्टिं चकार विधिरथवा ।
धनुषो दृष्ट्या त्वद्भ्रूसृष्टिं कृतवानितीव विशयो मे ॥ (१३)

अंब त्वन्निटिलतुलां प्राप्याष्टम्यां शशी तदन्यत्र ।
तदभावादन्यतिथीः निजवृद्धिक्षयकृतो न कामयते ॥ (१४)

ब्रुवते त्वत्कचबृन्दं ध्वान्तं कथमंब शिरसि हीन्दुकला ।
अथवा स्थाने महतां सन्निधिररितां निसर्गजां कृषति ॥ (१५)

## कान्तिमतीस्तुतिः

करसरसिजधृतकीरं करिवरकुंभस्तनं जगन्मधुरम् ।
कान्तिमतीनामानं कंचन चेतसि करोमि भूमानम् ॥ (१)

गहने कीचकगहने निवसन्त्यपि कान्तिमत्यभिख्ये त्वम् ।
निष्कण्टकपथमंब प्रदर्शयस्येष सद्धर्मः ॥ (२)

नामनि कान्तिमती त्वं रूपेऽपि यथा विभासि कान्तिमती ।
मामकपालनविषये कान्तिमती भव तथा जगज्जननि ॥ (३)

कीचकविपिननिवासं मेचकरूपं मनोहरोल्लासम् ।
मंगलगुणाधिवासं मंगलदं वस्तु भवतु दरहासम् ॥ (४)

संख्यावन्तोऽसंख्याः कान्तिमतीमपि वदन्त्यकान्तिमतीम् ।
कुवलयभासकमर्कं मातरकुवलयविभासकमपि यथा ॥ (५)

कीचकवनमपि गिरिजे पत्तनमभवत्त्वदंघ्रिविन्यासात् ।
अधनस्तव वीक्षणतो धनदो भवतीति किं चित्रम् ॥ (६)

## सभेशस्तुतिमञ्जरी

श्वेतं नाम महीपतिं मुनिवरश्रीरोमशस्याज्ञया
श्वेतारण्यमिति प्रकृष्टभवनेभूषायमाणं स्थलम् ।
प्राप्तं संसृतिवारिधेरसुतरादुत्तारयामास यः
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (१)

श्वेतं नाम महीसुरं गुरुतरात्कृत्तान्तभयान्मोचयां-
चक्रे वह्निसरोवगाहनवशाद्यस्तं शिवांश्वगतम् ।
सन्दर्श्याद्भुतताण्डवं निजसुखं संप्रापयामास च
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (२)

श्वेतारण्यवदादिसृष्टिसमये कैलासतो कानने
तिल्लाख्ये वटकाननादिषु महास्थानेषु चर्याश्रयः ।
दृष्ट्वा यत्नवनर्तनं परिगता नित्यां परां निर्वृतिं
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (३)

पौरोहित्यमदेन भूसुरमिमं रक्षस्त्वमन्याद्दृशं
गायत्र्याख्यसरोवरे तु विधिवत्संस्नाप्य कुंभोद्भवः ।
यद्भक्तः परमं पदं भगवतः संप्रापयामास तत्
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (४)

पद्मेन्दीवरवासितेषु सरसीश्रेष्ठेषु गायत्र्यसौ
सावित्री च सरस्वती च बहुधा तप्त्वा ययुश्छन्दसाम् ।
मातृत्वं त्रिदशार्च्यतां च परमां यस्मादधिष्ठाननां
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः (५)

वह्निर्ब्राह्मणशापतो दिनकरश्चन्द्रश्च शापात्त्रियाः
साध्व्याः शोकयुता मनोहरतरे यत्नवतीर्थत्रये ।
स्नानाद्यस्य च पादपद्मभजनान्मुक्ति परामाप्नुवन्
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (६)

कावेर्यां त्रिषु तीर्थवारिषु तुलामासादिमासेषु यः
स्नानाल्लिंगवरे सहस्रकमलश्रीपत्रमालार्पणात् ।
पश्चाद्वैहिकमंगलं दिशति शं स्वर्गादि चामुष्मिकं
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (७)

लेखैर्ब्रह्ममुखैः समर्चितपदो भीतैर्मरुत्वासुरात्
घोरं वैरिगणस्य भक्तनिवहस्याघोरमत्यद्भुतम् ।
आत्मानं बहुपूर्वजन्मसुकृतैर्दृश्यं दधौ यः स्वयं
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (८)

तादृग्रूपधरो मरुत्वहतकं स्वेनाजये संगतं
तत्सामर्थ्यमशेषमस्त्रनिचये संदृश्य मन्दं हसन् ।
शूलास्त्रेण जघान कोटिसवितृज्योतिःप्ररोहेण यः
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (९)

का चिद्ब्राह्मणकन्यका विपतिका मात्रा वियुक्ता तथा
पित्रा चाश्रितनिन्द्यवारवनितावृत्तिः क्वचिद्धर्मिला ।
क्षेत्रे यस्य मृता पतिव्रतयुतस्त्रीणां गता तत्पदं
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः (१०)

श्रीपञ्चाक्षरमन्त्ररत्नमनिशं सानन्दमावर्तयन्
श्रीरुद्राक्षमणीन् शिरःप्रभृतिषु स्थानेषु चाकल्पयन् ।
श्रीभस्म स्फटिकेन्दुकुन्दधवलं बिभ्रज्जनो यज्जनः
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (११)

माघे मासि यदा पुनर्वसुगतः पक्षे सिते चन्द्रमाः
तत्रारभ्य महोत्सवं कमलभूश्चके समं निर्जरैः ।
हस्तर्क्षावभृथं मनोहरतरं यस्यैवानुकंपानिधेः
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (१२)
श्वेतारण्यनिवासिना विरचिता श्रीब्रह्मकैवर्तक-
प्रोक्ताध्याय कथात्रसम्मतिमता नारायणेनेशितुः ।
भक्तेन स्तुतिमञ्जरी नटपतेर्यस्यानुकंपावशात्
श्वेतारण्यसभापतिः स जयति श्रीब्रह्मविद्यापतिः ॥ (१३)

## देवीनवरत्नमालिका

माहात्म्यं तव देवि वक्तुमिह मे मोहाय भूरं त्वावने
मोहात्कि करवै बुधा न ननु युः के हास्यमुच्चावचम् ।
ईहां पूरयितुं मदीयमुदितं व्याहारमाकर्णयेः
का हानिस्तव पावनामपि दयानीहारबिन्दुर्मयि ॥ (१)
पायात्का चन देवता पुरहरोपाजीया जगन्मोहिना
देयाच्चिन्तितमंत्रिपंकजजुषामायामहत्री नृणाम् ।
स्थेयात्सन्ततमग्रतश्च निकटे मायामयी चिन्मयी
भायादन्तरपञ्जरे मम पराजेया सुराणां परा ॥ (२)
नीवाराशनजीवना वनतले ये वा जलाभ्यन्तरे
जीवा जीवनजीवना गिरितटे ये वा मरुद्भोजनाः ।
ये वा ऽऽहारविवर्जिता बलिगृहे ये वा नरास्तत्त्वतो
नैवात्मानममी तवापि विविदुः का वा प्रसक्तिर्मम ॥ (३)

मारारातिमुरारिपंकजभवैराराधितांघ्रिद्वयां
मारामाजयिदेहकान्तिमधुरां स्फारानुकंपारसाम् ।
तारानाथकलावतंसमकुटां स्मेराननांभोरुहां
गौरारण्यनिवासिनीमविरतं नारायणीमाश्रये ॥ (४)

लीलालेशकृताविताहृतजगज्जालां जगत्साक्षिणीं
बालांभोरुहबन्धुतुल्यसुषमामालां कृपापूरिताम् ।
हेलाचर्वितगर्वितासुरगणां नीलालकैर्मेदुरां
कालारातिकुटुंबिनीं *मनःशालाविलासां भजे ॥ (५)

कामांकायतलोचनां मधुकरश्यामालकां मौक्तिक-
स्तोमाभाजयशीलकान्तिदशनग्रामाभिरामाननाम् ।
हेमाकल्पविभूषितांगलतिकां क्षामावलग्नस्थलां
कामारातिकुटुंबिनीं कविमनोधामाश्रितां पूजये ॥ (६)

एणांकायुतशोभमानवदनामेणाक्षिदीर्घेक्षणां
बाणारातिमुखामरार्चितपदां शोणाब्जराजत्कराम् ।
वीणावादनकालकंपितकचां नृणा जगत्यां सतां
त्राणानन्दयुतां नमामि सुमनोबाणारिसीमन्तिनीम् ॥ (७)

केनाप्यद्भुतपुण्यकर्ममणिना पीनादराः सज्जनाः
ये नामांब भजन्ति ते पदयुगं नानाविधश्रेयसे ।
तानाम्नायबहिर्मुखा गतभया नाना विनिन्दन्ति हा
दीनाः किं करवामहै वयममी नानाधिपूर्णे कलौ ॥ (८)

आभात्यन्तरपञ्जरेषु जगतां या भाविताऽहर्दिवं

शोभानिर्जितबालभानुरखिलान्याभान्ति यस्या हृदि ।

श्रीभारत्यभिवन्दितांघ्रिकमला सौभाग्यसिन्धुर्मनः-

क्षोभादीनपनुद्य मे वितनुतां सा भावुकं पार्वती ॥ (९)

**शिवतत्वसुधानिधिपुराणान्तर्गशिवार्चनप्रकरणस्थशिवस्तुतिः**

अनुचितमनुलपितं मे यत्त्वयि शंभो तदागमः शान्त्यै ।

अर्चां कथमपि विहितामंगीकुरु सर्वमंगलोपेत ॥ (१)

ध्यायामि कथमिव त्वां धीवर्त्मविदूरदिव्यमहिमानम ।

आवाहनं विभोस्ते देवाग्र्य भवेत्क वा कुतः स्थानात् ॥ (२)

कियदासनं प्रकल्प्यं कृतासनस्येह सर्वतो भवत ।

पाद्यं क तेऽर्घ्यमपि वाऽऽपाद्यं सर्वत्रपाणिपादस्य ॥ (३)

आचमनं ते स्यादपि भगवन्भव सर्वतोमुखस्य कथम् ।

मधुपर्को वा कथमिव मधुवैरिणि दर्शितप्रमादस्य ॥ (४)

स्नानेन किं विधेयं सलिलकृतेनेह नित्यशुद्धस्य ।

वस्त्रेणापि न कार्यं देवाधिपते दिगंबरस्यैव ॥ (५)

स्फुरति हि सर्पाभरणं सर्वांगे सर्वमंगलाकारम ।

अतिवर्णाश्रम भवतो नास्त्युपवीतेन कश्चिदुत्कर्षः ॥ (६)

गन्धवती हि तनुस्ते गन्धाः किं नेश पौनरुक्त्याय ।

पुष्करफलदातारं पुष्करकुसुमेन पूजयामि त्वाम् ॥ (७)

शमधनमूलधन त्वं सकलेश्वर भवसि धूपितः केन ।

दीपः कथं शिखावान् दीप्येत पुरः स्वयंप्रकाशस्य ॥ (८)

अमृतात्मकमपि भूमन् अशनं किन्नाम नित्यतृप्तस्य ।
त्वय्याम्रेडितमेतत्तांबूलं यदिह सुमुखरागेऽपि ॥ (९)

उपहारोभूयादिदमुमेश यन्मे विचेष्टितमशेषम् ।
नीराजयामि तमिमं नादात्मानं सहाखिलैः करणैः ॥ (१०)

सुमनश्शेखर भवतो भारः सुमनोञ्जलिर्भवति ।
छत्रं द्युमन् द्युमूर्ध्नः चामरमपि किं जितश्रमस्य तव ॥ (११)

नृत्यं प्रथतां कथमिव नाथ तवाग्रे महानटस्येह ।
गीतं किं पुरवैरिन् गीतागममूलदेशिकस्य पुरः ॥ (१२)

वाद्यं डमरुभृतस्ते वादयितुं धुरि परस्य का शक्तिः ।
अपरिच्छिन्नस्य भवेदखिलेश्वर कः प्रदक्षिणविधिस्ते ॥ (१३)

स्युस्ते नमांसि कथमिव शंकर परितोऽपि विद्यमानस्य ।
वाचामगोचरे त्वयि वाक्प्रसरो मे कथं नु संभवतु ॥ (१४)

नित्यानन्दाय नमो निर्मलविज्ञानविग्रहाय नमः ।
निरवधिकरुणाय नमो निरवधिविभवाय तेजसेऽस्तु नमः ॥ (१५)

सरसिजविपक्षचूडः सगरतनूजन्मसुकृतमाधिजटः ।
दिक्कूलंकषकिरणो दृष्टिपथे मेऽस्तु धवलिमा कोऽपि ॥ (१६)

जगदाधारशरासं जगदुत्पादप्रवीणयन्तारम् ।
जगदवनकर्मशूरं जगदुद्धारं श्रयामि चित्सारम् ॥ (१७)

कुवलयमहयुक्छगलैः कुलगिरिसर्वस्वकवचितार्धांगैः ।
कलुषविदूरैश्वेतः कवलितमेतत् कृपारसैः किं चित् ॥ (१८)

वसनवते करिकृत्त्या वासवते रजतशैलशिखरेण ।
वलयवते भोगभृता वनिताभागाय वस्तुने नमः ॥ (१९)

सरसिजकुवलयजागरसंवेशनजागरूकलोचनतः ।
सकृदपि नाहं जाने सुरान्तरं भाग्यकामसंभोगात् (२०)

आपाटलिमजटानां आनीलच्छायकन्धरासीम्नाम् ।
आपाण्डुविग्रहाणां आद्रुहिणं किङ्करा वयं महसाम् ॥ (२१)

मुषितस्मरावलेपे मुनितनयायुर्वदान्यपदपद्मे ।
महति मनो रमतां मे महसि दयापूरमेदुरापांगे ॥ (२२)

शर्मणि जगतां गिरिजानर्मणि सप्रेमहृदयपरिपाके ।
ब्रह्मणि विनमद्रक्षणकर्मणि तस्मिन्नुदेतु भक्तिर्मे ॥ (२३)

कस्मिन्नपि समये मम कण्ठच्छायासधर्मकालाभ्रम् ।
अस्तु पुरो वस्तु किमप्यर्धांगदारमुन्मिषज्जटिलम् ॥ (२४)

जटिलाय मौलिभागे जलधरनीलाय कन्धराभोगे ।
धवलाय वपुषि निखिले धाम्ने स्यान्मामको नमोवाकः ॥ (२५)

अकरविलसत्कुरंगैः अवृषतुरंगैरमौलिधृतगंगैः ।
अकृतमनोभवभंगैः अलमन्यैर्जगति दैवतम्मन्यैः ॥ (२६)

कस्मै वच्मि दशाम्मे कस्यार्द्रं हृदयमस्ति शक्तिर्वा ।
कस्य किलोद्धर्तुं मां क्लेशात्त्वामन्तरा दयासिन्धो ॥ (२७)

याचे नाभिनवं ते चन्द्रकलोत्तंस किंचिदपि वस्तु ।
मह्यं प्रदेहि भगवन् मदीयमेव स्वरूपमानन्दम् ॥ (२८)

भगवन् बालतया वा भक्त्या वा व्यापदाकुलतया वा ।
मोहाविष्टतया वा मास्तु च ते मनसि यद्दुरुक्तम्मे ॥ (२९)
यदि विश्वाधिकता ते यन्निगमागमपुराणयाथार्थ्यम् ।
यदि वा भक्तेषु दया तदिह महेशान पूर्णकामः स्याम् ॥ (३०)

## सुब्रह्मण्यशतकम्

ओंकारार्थाय तीर्थाय तीर्थानां तीर्थजन्मने ।
समर्पितपुमर्थाय सदर्थायात्मने नमः ॥ (१)
कृपीडयोनये पीडावनालेर्मृडसूनवे ।
जडाजडनिदानाय षडास्यायात्मने नमः ॥ (२)
कस्मै चन नमः पुंसे परस्मै भूरितेजसे ।
स्मरविस्मेरवपुषे स्मरारिजनिमीयुषे ॥ (३)
अब्धिकाञ्चितमादित्यैरधिकाञ्चि भवांबुधेः ।
तारकं तारमन्त्रार्थं तारकारातिमाश्रये ॥ (४)
अरुणारुणधामानं करुणावरुणालयम् ।
शरणं भज पाथोजचरणं बर्हिवाहनम् ॥ (५)
मल्लीवल्लीप्रसूनालीच्छायादायादन्तभः ।
वल्लीसल्लीलया युक्तः पायादायासहा गुहः ॥ (६)
तुण्डीरमण्डलीभूषापुरवासा गुहाभिधा ।
डिण्डीरखण्डसच्छायदरहासाऽस्ति देवता ॥ (७)
नेदिष्ठे साधुलोकानां दविष्ठे पापचेतसाम् ।
काञ्चीकोष्ठे राजमाने वल्लीप्रेष्ठे मनोऽस्तु मे ॥ (८)

शूरोऽपि गुह शूरं त्वं तारकोऽपि च तारकम्।
अवधीस्ते तदुचितं निन्द्यते ह्यात्मघातिता ॥ (९)

यथेश्वरस्तव पिता स्वामी गुह तथा भवान्।
तं च त्वां च विहायैतौ शब्दौ द्वावौपचारिकौ ॥ (१०)

यान्तं बर्हिमतल्लच्या भान्तं वल्लया तटित्तनूवल्लया।
रान्तं कल्पककल्पं प्रशान्तं ध्वान्तं गुहं भजेऽनीहम्॥ (११)

मोचारुचिचयवाचा नीचान् याचति जनोऽवनौ काचान्।
हन्त विचिन्तकचिन्तितसन्ततिसन्तानगुहमसंचिन्त्य ॥ (१२)

मृदुलं सरलं विपुलं धवलं पाटलमनाविलं नीलम्।
वचसि मनस्युरसि रदे वपुषि यशस्यथ कचे गुहं वन्दे ॥(१३)

चन्द्रकिणा गतिमन्तं चन्द्रकलालंकृतेन पितृमन्तम्।
मल्लीसुमशुचिदन्तं वल्लीकान्तं भजेऽहमश्रान्तम्॥ (१४)

कांच्यां क्षोणीकांच्यां कोष्ठे स्वीयेऽखिलस्थलश्रेष्ठे।
वल्लीं श्लिष्यन्वल्लीं स्वामी कल्पोऽस्तु दृष्टिपथगामी ॥ (१५)

वेंकटशैले विपुले संकटहानाय भव्यभानाय।
गुहमहमहमिकयाऽमी लोके लोकाः सभक्ति लोकन्ते ॥ (१६)

क्षणदाकररुचिरास्यं क्षणदं मुनिचित्तरंगकृतलास्यम्।
क्षणिकाचलगषडास्यं क्षणमपि विस्मृत्य किं जनैरास्यम् ॥(१७)

सेनानीरसि शूरः स्वामी दुर्गाकदेशरम्यमणिः।
रणपुरवासं तनुषे गुह तव युक्तं त्रिलोकवीरस्य ॥ (१८)

अर्हितमघिप्रपञ्चं गर्हितरोगालिशमनभम्यञ्चम् ।
बर्हिमतल्लीमञ्चं बर्हिगिरीशं भजे सरोमाञ्चम् ॥ (१९)

वेद्ये वेदैर्बाल्यावैद्येश्वरलालनीयपार्श्वयुगे ।
सद्दयया सुकुमारे मुक्तकुमारे मतिर्मदीयाऽस्ताम् ॥ (२०)

सोमातिकान्तमुखधामानमस्त्रशिखिभूमाकुलामररिपुं
प्रेमान्वितं नमति मामाभिगीतमुरुभीमार्तिपाटनपटुम् ।
कामायुताभमभिरामांघ्रिपद्मयुगभौमामहेशविभवं
सीमातिगामिदयमा मा जहीहि गुहनामानमन्तर विभुम् ॥

कान्ताशया जगति मोचाफलातिरुचिवाचा प्रदानमहतां
प्राचां समूहमिव याचामहे स्म धनिनीचावलि न्वपि हृदा ।
नो चारुकीर्तिभरमाचांतभीतिजरमा चाब्जयोनिभुवना
दा चातलादवनमाचारयन्तमखिलाचार्यमाप्नुम गुहम् ॥

श्वासायितश्रुतिमनासादितं दुरितवामान्तरैः खलजनैः
व्यासादिशस्यतरदासांन्तरंगवरकामारपुष्कररुहम् ।
हासाच्छमौक्तिकविभासा समाकलितनासान्तिकाभरणमों
प्रासादभासिशुकमासादनीयमिह सांसारिकैः स्मर गुहम् ॥

श्रीकाञ्चिमध्यगतमाकाशमुख्यजगदाकारवारजनकं
पाकापकारिमुखनाकाव्याञ्चितमनीकावलीपरिबृढम् ।
एकाम्रनाथसुतमाकालिकार्तिहृतमाकांक्षितार्थदमहं
केकावता सगतिमाकारवन्मदनमाकारये गुरुगुहं ॥ (२४)

आराधयामि खलु नारायणं विबुधवर्गार्गलिमायिनमलं
मारान्तकारिमपि चाराधये बहुलधाराग्निधारादिनमहम् ।
शूराग्र्यमत्यजमदूरागतं किमिति दूरादसाध्यमविधा-
धाराजमानगुणधाराशि वन्दे परनाराभिधेयममलम् (२५)

प्राधान्यभाजमखिलाधारगाखिलमनाधारणाग्रचर्यविभवं
त्रेधा गुणानविशमाधाय सृष्टिधृतिबाधाकृतं त्रिजगताम् ।
मेधाप्रमोदसुखबोधादिसत्त्वगुणमाधापयन्तममलं
नाथामहं गुहमबोधादिहानिमपि बाधात्रदुर्लिपिहतिम् ॥(२६)

कन्दर्पदर्पहरसौन्दर्यशालिनममन्दप्रतापयशसं
कुन्दस्मितं सदयमन्दर्शनं सुकृतकन्दस्य सुन्दरफलम् ।
छन्दःप्रबोध्यमिह सन्दग्धरोगवनसन्दर्गिनाभयकरं
स्कन्दं सदा भजतु विन्दत्वनर्घ्यसुखमन्दर्भमेव सुजनः ॥

एणांकशोभमुख वीणामुनीन्द्रनुत बाणारिमातुल विभो
शोणाब्जवल्लभमनि पाणावनन्तधनुत्राणानलिं भुवने ।
त्राणादिसत्कृतिधुरीणाय मूककृणि माणादिशोच्यजनुषां
नृणां नगः कुसुमबाणारिमौलिमखकोणाश्चितांग भवते ॥

नानाविधाकृतिमहीनात्ममानमविमानाधिरूढवपुषं
दीनालिचिन्तितविधानावबद्धपरिधानाञ्चलं त्रिभुवने ।
एनांसि जक्षतमनूनानि भानुमिव पीनान् तुषारनिकरान्
आनाधते हृतिमभानावृतेः सपदि मीनांकवैरिजमयम् ॥

बालाब्जबन्धुकरमालासतीर्थ्यरुचिजालांगमभ्रपटली
नीलाभकेशचयमालानमाश्रितविलोलान्तरंगकरिणाम् ।
कोलाहलिप्रमथलीलाविशालसुमडोलामहोत्सवमुदं
शैलाधिराजसुतया लालितं हृदय कालारिजं भज गुहम् ॥

निराबाधे बोधे निजवचनलीने परिजने
निरायासे श्वासे निखिलकरणे पाटवचणे ।
निजायत्ते चित्ते निरुपमगुणं निःस्वशरणं
निषेवेऽहं सोहं निरयदमनं केकिगमनम् ॥ (३१)

नितान्तं दूयेऽन्तर्निरयिनिचयाक्रोशसदृशैः
शुनां शुष्कास्यानामशुभभपिताटोपकटुकैः ।
वचोभिर्नीचानां वरद वरणीयामरवरैः
यथा सौख्यं यायामहमिह यतेथा गुह तथा ॥ (३२)

परार्थं वा स्वार्थं भुवि भजतु दुर्धीरुत सुधीः
पदद्वंद्वोपान्तं परिहसितपाथोरुहपदम् ।
विनेतुः क्रौञ्चाद्रेर्विषधरभुगंगे विलसतो
विनिन्द्यं पंथानं विविधविमतीनां न विशतु ॥ (३३)

प्रसादः पूर्णो वा विगलितफलो यस्य नृपतेः
तमेवासेवन्ते जगति पशवोऽध्रिद्वययुताः ।
कृपालेशो सृष्टिस्थितिहृतिकरत्वं हि सुलभं
यदीये षड्वक्त्रं तमिह हृदये के विदधते ॥ (३४)

शिवं वा विष्णुं वा हिमगिरिसुतां वा गणपतिं
रविं वा धातारं यदि भजति कश्चित्समुदितम् ।
गुहं वा कश्चिच्चेद्भजति नितरां केवलमुभौ
विचित्रं जायेते बहुमुखमहोपासनयुतौ ॥ (३५)

धनाशा भार्याशा द्वयमिदमनर्थायनियुतं
यथा वा सन्त्याज्यं सकलयतिभिर्मोक्षरतिभिः ।
तथा पुत्राशेति श्रुतिवचसि दृष्टेऽपि यमिनः
कुमाराशां चित्रं न हि जहति मुक्तिं च दधते ॥ (३६)

जगत्यां स्वामित्वं पुनरपि च शूरत्वमथवा
कुमारत्वं प्रीत्यास्पदमिह पृथक्त्वेऽपि भवति ।
गुहे संभूयैव त्रितयमिदमास्ते किमुत तत्
त्रयं कस्यारुच्यै भवति मधु मोचा पय इति ॥ (३७)

कवेराद्रेः पुत्र्यास्तटभुवि निरस्तांहसि नृणां
समुत्तुंगे स्वामिक्षितिभृति विराजन्विनमताम् ।
पयःपाटीरादिप्रचयनिचितैर्विविधगणैः
विचित्रैः संतुष्यन्नपनुदति रोगानिह गुहः ॥ (३८)

समीरैः कावेर्या विमलजलवीचीकणहरैः
तटारामस्फारप्रसववरसौरभ्यसृमरैः ।
कुमाराद्रिस्थायी निचितनिजपार्श्वः स्थिरतरं
कुमारः सम्मोदं व्रजति च सुखं यच्छति च मे ॥ (३९)

फलांभःस्नानान्तर्महितभसितालेपविमलः
सरैरुद्राक्षाणां कलितगलभूमण्डनविधिः ।
महाभिक्षूष्णीषस्थगितकचसीमा गुहगिरेः
कुमारः कूटेऽसौ जयति च मुदं मे दिशति च ॥ (४०)

कमलकलितधामा कापि कारुण्यसीमा
करनलिनयुगं ते पादपद्मं मुखाब्जम् ।
नयनसरसिजं च प्रेक्ष्य पङ्क्त्वं तत्त-
त्पदगमनवशेन प्राप लोलेति नाम ॥ (४१)

करचरणमुखाब्जे नेत्रकञ्जे नखेन्दौ
गुह तव रदकुन्दे दन्तवासःप्रवाले ।
वसतिमुपगतापि श्रीर्यदब्जालयेति
व्रजति वरयशस्तत्किं कृतं कर्म पद्मैः ॥ (४२)

शरवणभव ये त्वन्नामवाच्याः क्रमेण
क्षितिपतितिलकानां तापमाग्रेसराणां ।
नमदखिलजनानामीशते तेपि भव्यं
कलयितुमविलंबं येन केनापि भूम्ना ॥ (४३)

विमलचरणपद्मं वित्रसच्छूरपद्मं
विपुलदयममायं विद्रुमच्छायकायम् ।
विहितविनतपोषं विश्वविश्वासिवेषं
विनुत विषधराशं विं मुदाऽऽरूढमीशम् ॥ (४४)

गुरुरपि हिमशैलो जाड्यसंकेतभूमिः
पतिरपि जडराशिर्देवनद्या महत्त्वं ।
नहि भवति निदानं किन्तु षाण्मातुर त्वं
निखिलजगदधीशः पुत्र इत्येतदेव ॥ (५०)

कल्हाराद्रिमुपेयुषे कलिरुषे कन्दर्पकान्तत्विषे
कामारेर्जनिमीयुषे कविपुषे कारुण्यवीचीजुषे ।
कल्याणाचलकूटकम्रवपुषे कल्लोलपट्टकमुषे
क्रौञ्चामर्त्यरिपुद्विषे नम इदं कस्मै चन ज्योतिषे ॥ (५१)

केशाकेशि शिरोरुजा कलयते सेवाकृतां रोगिणां
दण्डादण्डि रदस्पृशा च रुजया माप्नोति नक्तंदिवम् ।
पादापादि गदेन कुक्षिपिठरीरूढेन तन्तन्यते
कल्हाराद्रिविराजमान भगवन् स्वामिन् त्वदंघ्रिद्वयम् ॥(५२)

मुष्टीमुष्टि तनोति मूलरुजया शूलेन पाम्ना सदा
बाहूबाहवि गाहते कटिरुजा बाहूरुपद्व्याधिभिः ।
हस्ताहस्ति करोति नेत्रगदतः श्रोत्रत्वगाद्यामयैः
दण्डिन् श्रीफलिनीवनान्तविलसन् स्वामिन् त्वदंघ्रिद्वयम् ॥

कांञ्चीपत्तनवर्तनं कविमनोरंगस्थलीनर्तनं
काम्यत्वावसनं कराहतजगत्कल्याणबाणासनम् ।
काश्मीरस्तबकारुणं कलिसुहृत्कामादिसंवारणं
कामं दैवतवारणं कलय रे क्रौञ्चाद्रिसन्दारणम् ॥ (५४)

नन्दिन् शूलमिहानय द्रुतमसौ डिंभो मुनेः खिद्यते
नोपेक्ष्यो हि सुताबलावसुमता पत्या क चित्किकरः ।
इत्थं प्रोक्तवतीश्वरे गुह तदिर्थात्मसंगगम्त्वं धिया
शूरः शूलरुगित्यभूः पटपटाकुर्वन्नदान् रोषवान् ॥ (९५)

नाथ त्वद्वदनामृतत्विषि सदा संपूर्णताभाजने
निर्दोषांशलवे च मोदमहिते मित्रादयेऽस्मिन् सति ।
एकस्यां निशि पूर्णतास्पदमसौ दोषाकरः किं वृथा
पीयूषांशुरुदेति हामरहितो मित्रादितो चान्वहम् ॥ (९६)

त्वद्गांभीर्यमहाधनाभिलषितं वल्लीपतं वाहिनी
कान्तं योगिधिया समीक्ष्य भवतः शिष्यो मुनिः कुंभजः ।
रोषादेव करोदरेऽकृत ततश्चाचामति स्म द्रुवं
शिष्यः प्रीतियुतो गुरोर्वसुहरं जीवन् हि नोपेक्षते ॥(९७)

अत्र त्वं तु विलोचनद्वयवती तातस्य तिस्रो दृशः
सन्ति द्वादश मेऽवकान्ययि ततस्त्वत्तश्च तातादपि ।
उत्कृष्टोऽहमिति ब्रुवन् गिरिसुताचन्द्रावतंसौ महा-
सन्तोषांबुनिधौ निमज्जयति यः पायात्कुमारः स माम् ॥

वल्लीविभ्रमदर्पणं वसुमतीसम्मोदसन्तर्पणं
कामाक्ष्यंकविभूषणं कलिरुजासंतापनिर्वापणम् ।
श्रुत्यालीकचभूषणं श्रुतितटीपीयूषपूरद्रुणं
वाहाधीशितबर्हिणं वरघृणं वन्दे मरुद्धारणम् ॥ (९९)

शंभोः सूनुमगात्मजातनुभवं श्रीकृत्तिकानां सुतं
गांगेयं ज्वलनात्मजं शरजमित्याख्यानभेदाद्बुधाः ।
भाषन्ते गुहमेकमेव जगति ख्यातं श्रियं बिभ्रतं
सर्वेषामपि पक्षपातरहितां ब्रूमः कुमाराभिधाम् ॥ (६०)

चित्रं गुहस्य क्षणिकाचलेऽस्मिन् सेवागतेषु द्रुतमेति पंगुः ।
मूकस्तु चष्टे बधिरः श्रृणोति शिलष्यत्यबाहुस्तमवेक्षतेऽन्धः ॥

काचित्सती श्रीक्षणिकाद्रिनाथमासेव्य जात्यन्धमवाप्तनेत्रम् ।
कान्तं निजं बोधति रूपलक्ष्म्या स्वाचापि तं बोधयति स्वरेण ॥

काचित् पतिं स्वं बधिरं नितांतं कह्लारशैलाधिपतिं निषेव्य ।
आयातमालिंग्य रहःकथादिमानंगकेलीमुपयात्यपूर्वाम् ॥ (६३)

द्वैमातुरो मूषकवाहनस्त्वं षाण्मातुरो बर्हिणवाहनोऽहम् ।
इत्थं मुहुर्यः कलहायते स्म भ्रात्रा स पायादनिशं कुमारः ॥

शूरादयो बाह्यखला हतास्ते सत्वात्मनस्तेऽन्तरवैरिणः कं ।
सेनानितां तत्स्वगतां कृतार्थां द्वेधा ममारीनपहत्य कुर्याः ॥

भाराय नाकस्य युगः कुमार घोरार्तिमेकां नुदसि त्वमेकः ।
रत्नच्छटाः सन्ति वृथा सदानयन्नस्तु चिन्तामणिरेक एव ॥

स्वामिन् त्वमेकोऽसि रुजापहारी नान्या निर्लिपावलयो भवन्ति ।
शीतांशुरेकस्तममां निहन्ता नक्षत्रबृन्दानि नहीतराणि ॥(६७)

पीयूषभानुर्विसृजन् कलंकं रात्रिन्दिवं द्योतयुतश्च नित्यम् ।
पूर्णो यदि स्यात्तव वक्त्रसाम्यं स्वामिस्तदार्हेदिति तर्कयेऽहम् ॥

कि तातकण्ठेऽत्र विषं सुतेदं कृष्णा विषाभाऽम्ब किमो कुमार।
एतन्मृषा न ह्यमितं कुचाग्रं स्तन्यं सुधाम्बेति षयन्गुहोऽव्यात्॥

सेनान्यमीशं वनवल्लिदेवसेनाभिमालिंगितपार्श्वदेशम्।
नानाविधाकारमपुण्य दूरं मा नाम हासीरयि मानम त्वम्॥(७०)

भवता भवतापहरेण कृपाहृदये हृदये गुह नैव कृता।
ममता मम तावदियञ्च कुवाक् महतामहता प्रकृतिर्हि सदा॥

व्याख्या :—कृपाहृत् = करुणायुक्तमानस अये गुह भवतापहरेण भवता मम तावत् इयं ममता=अहन्ता=अहंस्तोतित्यहंकारः कुवाक्=सहृदयारञ्जनी स्तुतिवाक्च हृदये नैव कृता जडस्यापि मम तदुभयं त्वया सोढमित्यर्थः हि=यतः महतां प्रकृतिः सदा अहता=अविकृता (७१)

जनने ऽजननेह महाव्यसने मरणेऽमरणेऽपि कया विधया।
स्मरता स्मरतापितनूज पदं न मता नसताऽपि भयं सुगमम्॥

व्याख्या :—अजनन=जनिरहित स्मरतापितनूज कामारिसुत गुह इहअत्र जगति जनने महाव्यसने मरणे=अपमृत्यौ अमरणे=अमे=अलक्ष्मीके रणेयुद्धे च कयापि विधया=केनापि प्रकारेण पदं=त्वच्चरणं स्मरता सता=सज्जनेन नसता=असज्जनेनापि भयं नसुगमम् (७२)

मम वाममवाधितमाधिमुमातनुजातनुजातमुरुं जहि तम्।
यमिता यमितासहिताप्यवनौ जनता ऽजनताऽतितरां पतति॥

व्याख्या :—अजनत=अजेन ब्रह्मणा नत उमातनुज मम वामं=प्रतिकूलं अवाधितं=अबाधितं अतनुजातं=कामेन जातं तं उरुं आधिं जहि=नाशय अवनौ यं=आधिं इता=प्राप्ता जनता=जनततिः यमितया नियमेन सहितापि अतितरां पतति=पतितत्वं गच्छति (७३)

असि नाम हितो महितो जगतामनलात्मभवात्मभवांगरुचे ।
इति हि श्रुतिराश्रुतिराह ततः सुतरामव मामवमाचरणम् ॥(७४)

व्याख्या :—आत्मभवस्य=मनोभवस्येव अंगरुचे अनलात्मभव=अग्निसंभव गुह जगतां महितः हितः असि नाम इति हि=यतः आश्रुतिः=प्रतिज्ञावचनरूपा श्रुतिः आह ततः सुतरां अवमाचरणं नीचाचारं मां अव (७४)

गिरिजासुत मां सुतमां चरणं सुषमाशरणं शरणं ननु ते ।
गतमागमरागमरागयुतं विषये तनु चातनुचारुरुचे ॥ (७५)

व्याख्या :—अतनुवत् अनंगवत् चारुरुचे ननु हे गिरिजासुत सुषमाशरणं कान्त्यास्पदं ते तव चरणं सुतमां शरणं गतं मां आगमरागं वेदप्रियं विषये शब्दादौ अरागयुतंच तनु॥

वनवल्लिकयाऽलिकयातकनत्तिलकांकितयाऽङ्कितयान कृतम् ।
तव सेवनमेव न मे मनसा गुह मेदुरितं दुरितं तु कृतम् ॥(७६)

व्याख्या :—अलिकं ललाटं यातेन गतेन कनता दीप्यमानेन तिलकेन अंकितया अलंकृतया वनवल्लिकया वन-

वल्लीदेव्यासह अंकितयान अलंकृतवाहन गुह मे मनसा तव सेवनमेव न कृतं किन्तु मेदुरितं सान्द्रं दुरितं कृतम् (७६)

नय मां न यमान्तिकदेशमसज्जनभाजनभावमुपेतमपि।
न हिता न हि तातजना नगराट्तनयातनयातिखलेऽपि सुते ॥

व्याख्या :—नगराट्तनयातनय पार्वतीपुत्र असज्जनभाजनभावं सत्पात्रत्वाभावं उपेतमपि मां यमान्तिकदेशं न नय हि यतः तातजनाः अतिखलेऽपि सुते हिताः नभवन्तीति न ॥

वसुधावसुधाममुखा विषया विषमा विषमाक्षजने भुवने।
तनुमोऽतनुमोहममीषु कुतो वयमेव यमेतिहरे त्वयि नो ॥ (७८)

व्याख्या :—विषमाक्षजने शिवपुत्र भुवने वसुधावसुधाममुखाः भूधनगृहप्रमुखाः विषयाः भोग्यपदार्थाः विषमाः वामाः (इतिविदन्तो) वयमेव कुतः अमीषु अतनुं अधिकं मोहं अभिलाषं तनुमः यमेतिहरे यमबाधानिवारके त्वयि अतनुमोहं नो तनुमः (७८)

दितिजादितिजातमहापृतनाचरगोचरगोकटुताकटुतम्।
कलये कलये सरुषं गिरिजाजननं जननन्दथुमन्तरहम् ॥ (७९)

व्याख्या :—दितिजानां दैत्यानां अदितिजातानां देवानां महत्योः पृतनयोः सेनयोः चराणां असुरभटानांसुरभटानांच (यथाक्रमं) गोचरः नेत्रविषयः गवां दृशां इषूणां वा कटुता तैक्ष्ण्यं अकटुता अतैक्ष्ण्यंच यस्यतं कलये दुरिताय सरुषं

प्रननन्दथुं जनानन्दकं गिरिजाजननं पार्वतीसुतं गुहं अहं अन्तः मनसि कलये भावये (७९)

धरणीधरणीतनयातनयाञ्चनमञ्चनमंगलवर्यकरम् ।
मम काममकामहतां महतांधियमाधियमान्तकृतं तनुताम् ॥

व्याख्या :—धरणीधरान्नयतीति धरणीधरणीः पर्वतश्रेष्ठः तस्य तनयायाः तनयस्य गुहस्य अंचनं सेवनं अंचनमंगलवर्यकरं अंचनवर्यं सती गतिः मंगलवर्यं श्रेष्ठमैहिकादिश्रेयः तयोः करं सत् मम कामं भृशं अकामहतां कामैरनुपहतां आधिरेव यमः तस्य अन्तकृतं महतां (इव) धियं तनुताम् (८०)

अहं तावदासामहन्तादियुक्तः प्रजानां प्रकामं प्रजापालनोत्कम् ।
भवन्तं भवानीभव स्तोतुमीशे कथं यत् श्रुतिस्त्वत्कथायां नकल्या
क्षपायां दिवा वा क्षपानाथभानू क्षणं नैव कर्तुं क्षणं वा प्रवीणौ।
विहायेश वल्लीविहार त्वदाज्ञां विबोधैकहेतो विबोधे हृदीत्थम् ॥
महासेनभक्तिर्महाभीतिमुक्ति प्रभूताब्दवृष्टिः प्रतापस्य नष्टिम् ।
तमीशप्रकाशस्तमिस्त्रप्रणाशं सृजत्यर्कवृष्टिर्हिमानीविभेदम् ॥
शिखण्डीशयानं शिवांके शयानं श्रितौघाभिमानं श्रिया शोभमानम्
कृपांभोनिधानं कृतप्राणिधानं क्रियासन्निधानं क्रियाः हृन्निधानम्
शिखण्डीशहिण्डं शिवानन्दमण्डं त्रसद्दैत्यषण्डं त्रयीमौलिभाण्डम्
चलद्रुग्वरण्डं चमत्कारपिण्डं भजामोऽधिकुण्डं विभातं प्रकाण्डम्
करालप्रतापं कठोरारिकोपं करांभोजचापं कथाशेषपापम् ।
कलिध्वान्तलोपं कविस्वान्तदीपं कनत्कामरूपं कराजत्कलापम् ॥

कुलाद्र्यात्मभूजं कुबेराधिराजं गुहं केकिवाहं गुणग्रामगेहम् ।
तुलातीतकायं तुरीयं विमायं नुमश्चित्स्वरूपं नुवच्चित्तदीपम् ॥

ऋतं दूषयामोऽनृतं भूषयामः कलीनर्जयामो व्रतं वर्जयामः ।
सतस्तर्जयामोऽमतस्त्वर्चयामो न हि त्वां भजामो गुहैवं भवामः ॥

क्वचिद्वेदनिन्दां क्वचिद्देवनिन्दां कचिद्विप्रनिन्दां क्वचिद्धर्मनिन्दाम् ।
क्वचिन्मन्त्रनिन्दां क्वचिद्यज्ञनिन्दां बताकर्णयामः कथां नो गुहस्य

यदा धर्महानिर्यदा पापवृद्धिः
तदात्मानमुत्पादयामीत्युदीर्य ।
तथारीतियुक्तेऽपि कालेऽत्र कर्तुं
वृथा तन्न वाक्यं विशाखार्हसि त्वम् ॥ (९०)

श्रीकांच्यां चूतमूले गुह वससि तथा तत्र कौमारकोष्ठे
किं च श्रीवेंकटाद्रौ क्षणिकगिरितटे श्रीफलिन्याख्यधाम्नि ।
श्रीकेकावन्महीभृच्छिरसि रणपुरे वैद्यनाथालयेऽपि
स्कन्दाद्रौ चेन्दिपुर्यां नतगदहतये तत्र तत्रेतरत्र ॥ (९१)

आस्था मां सर्वसंस्थास्तव गुह रतये सेवितुं बाधते किं
कुर्यां यन्नैव लभ्यं धनममलमलं वाथ लभ्येत कृच्छ्रात् ।
लप्स्यन्ते याजका वा विधिमुखसकलाम्नायभेदान्विदन्तः
सन्तो नैवाथ लब्धा यदि कलिविभवादस्मि कर्ताऽहमज्ञः ॥

यः स्वामीति प्रसिद्धिं निखिलनियमनेनाख्यया चैति लोके
शौर्योदारत्वमुख्या गुणमणिनिकरा नित्यमध्यासते यम् ।

त्रैलोक्यं निर्मिमीते विधिरवति हरिर्हन्ति यः सन् पिनाकी
सोऽस्मानव्याजमव्यादनुपमकरुणः सन्ततं तारकारिः ॥

शूरः स्वामी भवन्नप्यमलगुण विभो संहरन् शूरपद्मं
तूलालीतुल्यसत्वान् श्रुतिमखविबुधब्रह्मनिन्दास्वमन्दान् ।
मन्दाक्षास्तिकचवार्तानिचयगृहमुखान् किं न हंस्यद्य यो वा
को वा भूत्वा ऽथवा ते युगसरणिरियं किं मता तारकारे ॥

त्वं तुर्यं ब्रह्मतत्वं निखिलजनिभृतिध्वंसकृत्त्वं मुमुक्षोः
सेव्यस्त्वं भर्जकं त्वं भवतिमिरततेर्द्योतमानं च तेजः ।
ध्येयं वस्तु त्वमन्तःकरणविलसितप्रेरको देहिनां त्वं
सावित्र्यर्थस्त्वमन्तः सवितुरसि गुह त्वामतश्चिन्तयामि ॥

त्वं वज्री त्वं कृशानुस्त्वमसि पितृपतिर्यातुधानाधिपस्त्वं
त्वं पाशी त्वं समीरस्त्वमसि धनपतिस्त्वं शशांकोत्तमांगः ।
त्वं धाता चक्रपाणिस्त्वमिति गुरुगुह व्यष्टिरूपेण तत्तत्
काष्ठाधीशत्वमाप्त्वा जगदखिलमिदं केवलो रक्षसि त्वम् ॥

काष्ठा नाडी मुहूर्तं दिनमथ रजनी गर्भकं पक्षमासौ
बीजं संवत्सरो वा युगमपि च युगासारमन्वन्तरे वा ।
कल्पो वा त्वं रविस्त्वं विधुरवनिसुतः सोमजो गीष्पतिर्वा
शुक्रः कालस्ततस्त्वां गुह शरणमिमः कालकालेशरूपम् ॥

गौरीं गंगां सुपर्णीं मुनिकुलमहिषीः कृत्तिकाश्चाग्निभार्यो
यस्यांबामीशमग्निं जनकमथ बुधा नैगमेषं विशाखं ।

शाखं मित्रं च वल्लीमभिदधतितरां देवसेनां च कान्तां
सुब्रह्मण्याय तन्वे प्रणतिशतमहं बर्हिवाहाय तस्मै ॥ (९८)

त्वं स्वामी तारकारे वयमपि जगति त्वां सदा पूजयामः
पाल्यास्सर्वे त्वयैव स्पृहयति जनता तुभ्यमेवादरेण ।
त्वत्तो नान्यत्समस्तं तव पदकमलं यान्ति देवार्चनानि
त्वय्येवास्माकमन्तःकरणमसदृशप्रेम तिष्ठत्यजस्रम् ॥ (९९)

यत्प्राहुस्तारवाच्यं श्रुतियुवतिशिरोभासुरं रम्यरत्नं
यत्प्राप्यं वस्तु काण्डद्वयविधिषु सतामध्वना येन केन ।
यत्तुर्यं सत्यमाद्यं विमलमजननं सच्चिदानन्दरूपं
सुब्रह्मण्याभिधानं सततमभयदं ब्रह्म तद्भासतां मे ॥(१००)

श्वेतारण्याख्यमैशं स्थलमधिवसता यज्वनारायणेन
श्रीमद्वल्लीशपादांबुजयुगलदृढप्रीतिना गुंफितैषा ।
सच्छन्दा रम्यवृत्ता रुचिरगुणयुता मौक्तिकालीव नन्द्या
सुब्रह्मण्यस्तुतिः श्रीवृषमनुजवरैर्नीयतां कण्ठदेशम् ॥(१०१)

---

## त्रेतास्तुतिः

वेदान्ता यदुपाश्रयेत्सुखमुरु प्राप्तुं परत्रेह चे-
त्येवं निष्कपटं वदन्ति भगवान्नैष्कर्म्यसिद्धिप्रदाम् ।
यस्योपास्तिमशेषसंकटहरामूचे च गीतागुरुः
तद्ब्रह्मानुदिनं स्मरामि मनसा त्रेताभिधानं परम् ॥ (१)

यच्छैवाः पशुपाशमोचनकरं सांबं पशूनां पतिं
व्यूहं भागवताश्च षड्गुणयुतं यद्वासुदेवाभिधम् ।
यत्सांख्याः पुरुषं परं प्रकृतितो निर्लेपमाचक्षते
त्रेताभिख्यमहर्निशं परमहं तद्ब्रह्म संचिन्तये ॥ (२)

यत्कैलासमहीधरे सुरनदीवीचीसमीरस्फुर-
न्मन्दारद्रुमपुष्पगन्धसुरभावस्तोकसौख्यास्पदे ।
द्वंन्द्वं क्रीडति नित्ययौवनमुमाशीतांशुचूडाभिधं
तत्त्रेताह्वयमस्तु वस्तु परमं मन्मानसे सन्ततम् ॥ (३)

वैकुण्ठे विरजानदीजलसमासिक्तैर्दृगानन्दनै
रम्लानैस्तुलसीवनैः सुरभिते नित्यैर्युते सूरिभिः ।
द्वंद्वं क्रीडति यत्किमप्यनुपमं लक्ष्मीनृसिंहाभिधं
तद्ब्रह्म स्फुरतु प्रशस्तविभवं त्रेताभिधं चेतसि ॥ (४)

यत्सत्ये सनकादिभिर्मुनिकुलैः सान्द्रे प्रमोदांबुधा-
वामग्नैरपराजितं रिपुगणैर्बाह्यैस्तथाऽऽभ्यन्तरैः ।
द्वंद्वं क्रीडति भारतीकमलभूरूपं विनम्रादरं
त्रेताख्यं परमं महस्तदनिशं मन्मानसे भासताम् ॥ (५)

यन्नाके रमणीयदेवगणिकानृत्यैरनिन्द्यैः क्वचि-
द्गानैश्चित्ररथैश्च नारदमुनेर्वीणाविनोदैस्तथा ।
आनन्द्ये रमते सहामरगणैर्द्वंद्वं शचीन्द्रात्मकं
ज्योतिस्तन्मनसि स्फुरत्वनुदिनं त्रेताभिधानं परम् ॥ (६)

पीयूषांबुधिमध्यभासिनि मणिद्वीपे निर्लिपद्रुम

स्तोमावीतकदंबकाननयुते चिन्तामणीवेश्मनि ।

कामेशांकविभूषणं भवति यच्छ्रीकामकोटीश्वरी

रूपं तत्परमस्तु वस्तु सततं त्रेताभिधं चेतसि ॥ (७)

जिह्वाः सप्त बहिः प्रसार्य विधिवद्दत्तं समन्त्रं हविः

सान्नाय्यप्रमुखं समोदनिनदं यद्भक्षयत्यध्वरे ।

यष्टॄणां शुभमातनोति परमं यच्चैहिकामुष्मिकं

त्रेताभिख्यमहर्निशं स्फुरतु मे तज्ज्योतिरन्तः परम् ॥ (८)

त्वत्सेवाफलमुत्तमं प्रति बुधा विश्वासहीना मुधा

दुर्धीमत्तधनिव्रजं कथमपि प्रत्युत्तरानादरम् ।

अज्ञातोत्थितिमश्रुतप्रतिनतिं संवीक्षितुं सस्पृहाः

यातायातपरिश्रमं भगवति त्रेते लभन्ते बत ॥ (९)

त्रेते देवि विपश्चितोऽपि सकलश्रेयोनिदानं द्विजा

स्त्वत्सेवां परिमुच्य लोलमनसः प्रारभ्य कार्यान्तरम्

प्रत्यूहोपहता भवन्ति बहुधा यद्वा तदीयायते-

र्दुर्वारं विपरीतभावमुपयन्त्युच्चावचैर्हेतुभिः ॥ (१०)

त्रेते देवि कलेरयं स महिमा दुष्टस्य यत्संप्रति

त्वत्सेवां कथयन्ति केचिदबुधास्तन्द्रालवो दुष्कराम् ।

केचिन्नास्तिकतामलीमसहृदो जल्पन्ति हिंसाश्रयां

व्याख्यान्तः श्रुतिमन्यथा कति चन क्षत्नोचितां चक्षते ॥

श्वेते त्वत्परमान्विशुद्धमनसो वैधीमहिंसायितां
हिंसां दिष्टवतश्च भक्षितवतश्चेडां द्विजान् केचन ।
निन्दन्तो रचयन्त्यवैधमबुधा निर्भीकमुच्चावचं
हिंसामांसनिषेवणादिकमिदं तिष्यस्य दुश्चेष्टितम् ॥ (१२)

श्वेते त्वद्धरिवस्यितामरधुनीमेध्यांबुनिर्धौतहृ-
न्मालिन्यानमृताशिनोऽपवदितुं सद्ब्राह्मणान्बुद्धताम् ।
साक्षाज्जन्तुविहिंसनामिषसुराहाराद्यवैधक्रियाः
कर्तुं भूसुरबन्धवः कति चन क्रव्यादतां चाश्रिताः ॥ (१३)

श्वेते त्वामतिघोरपापिनिबिडे कालेऽप्यमुष्मिन् कलौ
मूलं प्राग्रहरस्य भावुकभरस्यालंब्य वर्तामहे ।
उच्चां प्रापयितुं स्थितिं तदितरामाहोस्विदुच्चावचां
शक्ता देवि भवत्यनन्यशरणांस्तत्पातु नः सर्वदा ॥ (१४)

ऋद्धिर्ह्यग्निमुखेति वेदवचनं विश्वस्य निर्विघ्नं
श्वेते देवि भजन्त्यनन्यशरणास्त्वामास्तिकाः सर्वदा ।
निन्दत्सु श्रुतिमुत्सृजत्सु भवतीमृद्धिः परा नास्तिके-
ष्वित्येषापि विशेषदुष्कृतनिधेस्तिष्यस्य दुष्टा क्रिया ॥

ज्ञात्वैवाभिमतं पराशरमुनेर्धर्माश्च विप्राश्च ये
व्याप्ताः सन्ति युगे युगे न हि बुधैस्ते गर्हणीया इति ।
श्वेते त्वद्भजने रतान् द्विजमणीन्निन्दत्सु विप्राधमे-
ष्वौदासीन्यमिवाश्रिता मुनिगणाः कुत्रापि निद्रान्ति ते ॥

त्रेते निर्भयमालपन्ति कति चित्कालान्तरे त्वत्क्रिया
कार्या तत्र च बाहुजैकविषया पैष्टान्पशूनाश्रिता ।
एवं विप्रतिपत्तिगाढतमसा सञ्छादिते विष्टपे
त्र्य्यर्थांशुमताऽवभासिततया तस्यां प्रवृत्ता वयम् ॥ (१७)

के चित्केशवकीर्तनं वरमिति त्रेते त्वमर्च्या न चे-
त्युद्घोधन्त्युरुभक्तियोगवचनैस्साम्यंशमानं ध्रुवम् ।
साम्यंशो जिनधीविलासजनितस्तत्रेति शङ्के यत-
स्त्रय्यैव ऋतुकर्मयोगवरता मानाग्र्यया बोध्यते ॥ (१८)

त्रेते दम्भफलस्पृहाविरहितं संसेविताभिर्यथा-
शास्त्रं तावकसत्क्रियाभिरमलस्वान्तस्य सद्ब्रह्मणः ।
श्रीमन्मुक्तिकुटुम्बिनीस्वयमुपाश्लेषादि सौख्यं परम्
ह्यक्षय्यं करबिल्वपत्रसदृशं निस्संशयं जायते ॥ (१९)

तत्तत्कृत्यनुमन्त्रणीयमनुषु स्पष्टं ब्रवीति श्रुति-
र्यद्यत्कामयते फलं तनु महद्यष्टा तदीयाभिधाम् ।
गृह्णीयादिति यत्ततोऽनुदिवसं सद्ब्राह्मणानामयि
त्रेते त्वां भजतां विशुद्धमनसां किं दुर्लभं भावुकम् ॥ (२०)

त्रेते ब्रह्मवदेव देवि भवती भात्येकधा च द्विधा
त्रेधा चापिच पञ्चधा ऽपि बहुधाऽप्यन्तर्बहिस्तिष्ठति ।
आत्मानं च यथाविधानमसकृद्वृक्षंच संक्रामति
श्रीमत्यद्भुतवैभवे द्विजकुलान्यर्चन्ति च त्वां सदा ॥ (२१)

त्रेते कर्मसु तेऽग्निहोत्रमिति यत्कर्म श्रुतं वैदिकम्
सायं प्रातरपि द्विजैरनुदिनं सेव्यं विशुद्धान्तरैः ।
नित्यत्वेऽपि सति प्रकृष्टफलतां तस्य स्फुटं ज्ञायते
निष्कालुष्यलवार्थबोधनपरैः काण्डद्वयीवेदिभिः ॥ (२२)

त्रेते त्वद्वरिवस्यितं भगवति त्यक्त्वा धनायावशा-
दिभ्यानीक्षितुमुत्सुकाः कथमपि प्राप्यापि तद्दर्शनम् ।
तैरस्माकं प्रकृतानुरूपवचनं नो शक्नुमो भाषितुम्
देवानादरणार्गळा हि भवुकद्वारं पिधत्ते किल ॥ (२३)

त्रेते स्वामिनि पक्षहोमविषया संकोच्य ते सेवनम्
त्यक्त्वा स्वापमतन्म नूतनकृतिं स्वल्पैरहोभिर्वयम् ।
यस्य प्रीतिमिवाधिगन्तुमधिकां सोगाद्यशश्शेषताम्
देवानादरणार्गळा हि भवुकद्वारं पिधत्ते किल ॥ (२४)

निष्कामं तव सेवनं भगवति त्रेते यदि स्यात्तदा
तत्स्वान्तस्य विरच्य शुद्धिमनघं ज्ञानं समुत्पादयेत् ।
इत्याम्नायरहस्यवेदनयुताः सन्तोऽपि कामै वयम्
तैस्तैः प्रेरितचेतसस्त्वयि रताः कामा ह्यजय्याः खलु ॥

त्रेते देवि यथाकथंचन जगत्यव्याहतं प्राभवम्
प्राप्तानां नव षट् स्फुटं कथयतां वाक्यं प्रमाणं जनाः ।
जानन्त्यस्मदुदीरितं श्रुतिशतप्रख्यापितत्वत्क्रिया
मानं नैव विदन्ति हा कलिविभोरैश्वर्यमेवंविधम् ॥ (२६)

त्रेते त्वत्परिपूजनस्य भगवत्येषा विभूतिः परा
यच्छ्यामाकसिलाशनोऽपि स भरद्वाजो महर्षिः पुरा।
कैकेयीसुतमागतं स्वनिलयं साकं चमूभिर्नृणाम्
दुष्प्रापेण वरातिथेयविधिना सुप्रीतमामन्यत ॥ (२७)

स्तोमं गोशकृतां क्रतोरनुगुणं शल्कव्रजं बर्हिषाम्
स्तूपं कोमलमुत्तमाश्च समिधो यच्चेतरत्साधनम्।
त्रेते देवि भवत्क्रियासमुचितं सज्जंविधातुंच तत्
प्रीतिस्संप्रति यादृशी भवति मे स्यात्तादृशी सन्ततम् ॥

सायं प्रातरपि त्रयीसमुदिता या ह्यग्निहोत्रक्रिया
तां निर्वर्तयितुं विशुद्धपयसा गव्येन कालाद्बहोः।
उत्पन्नं मम वाञ्छितं कथमिदं पूर्यामनुष्यां सुखम्
पूर्येतेति विचारविह्वलमनास्त्रेतेऽहमस्म्यन्वहम् ॥ (२९)

स्नानं पुण्यनदीजले प्रतिदिनं तत्रैव सन्ध्यां जपम्
तद्रोधस्तृणचारिधेनुपयसा त्रेते त्वदीयं हुतम्।
देवार्चां कुसुमैश्च तत्तटभवैस्तत्तोयसंसेकव-
च्छाल्यन्नैर्बलिकर्म भूसुरवरातिथ्यंच संप्रार्थये ॥ (३०)

त्रेते देवि तव स्पृहाविरहिता संसेविताऽपि क्रिया
तत्तद्वैदिकवाक्यजालगदितं शक्तैव दातुं फलम्।
इच्छाऽभाववताऽपि दीप्तिमहिता वह्नेरुदग्रा शिखा
स्पृष्टा किं खलु दाहशक्तिमधिकां स्वीयां न सन्दर्शयेत् ॥

मन्त्रब्राह्मणवाक्यजातविषयान् सम्यग्विदन्तो बुधाः
केचिन्न्यायविचारपूर्वकमनुष्ठातुं निबद्धादराः ।
त्रेते देवि भवत्क्रियां तदुचितं वेदानुवाकादिव-
द्ब्रूते यज्ञमपि श्रुतिर्भगवती हेतुं विमुक्तेर्यतः ॥ (३२)

केचिन्मन्त्रतदर्थबोधरहितास्संप्रेरिताःश्रद्धया
त्रेते देवि भवत्क्रियामनुपमां संसेवितुं सस्पृहाः ।
सन्त्येवाद्य तदप्यहं समुचितं मन्ये यतः श्रीपतिः
श्रुत्वाऽन्येभ्य उपासते त्विति वदंस्तेषामनुज्ञां व्यधात् ॥

पञ्चाग्नीन्समुपाश्रयन्ति कतिचि त्त्रीन्केचिदग्नीन्श्रय-
न्त्येकाग्निं कतिचि द्व्रजन्ति बहुधा तेष्वेव तृप्तिं गताः ।
तान् केचित्पुनरास्तिकाग्रिममहीदेवान्विनिन्दन्त्यमी
डम्भार्थं परकीयवित्तहृतये चोर्वीमटन्तीत्यहो ॥ (३४)

त्रेते देवि मधुव्रता वनतले तत्तत्प्रसूनोच्चयात्
किञ्चित्किञ्चिदुपाहरन्ति तृषया नुन्ना मरन्दं यथा ।
सद्भिप्रास्तव कर्मणि प्रबलया संप्रेरिताः श्रद्धया
सञ्चिन्वन्ति तथा धनं तत इतोऽप्यल्पेतरायासतः ॥(३५)

कौटिल्यं कलिकालवैभवभवं वर्ण्यं कथं मादृशै-
र्निर्भीकं प्रलपन्ति यत्खलजनाः कैश्चिच्छ्रुतिं कल्पिताम् ।
श्रुत्युक्तां तव च क्रियां भगवति तेते सहिंसां तथा
मांसाहारविलोलपण्डितमणिप्रज्ञासमुद्भासिताम् ॥ (३६)

केचिद्दुर्मतिभिः कदाचिदुदितां त्रेते भवत्कर्मणाम्
निन्दामम्ब कदा चिदुत्तममहीदेवैस्समुद्भाविताम् ।
श्लाघांच प्रतियन्ति यत्स महिमा सत्संगदुस्संगयो-
स्संसर्गानुगुणा भवन्ति हि गुणा दोषाश्च लोके नृणाम् ॥

देवि त्वत्क्रिययोत्सुकःसकलया त्रेतेऽस्मि सोमेद्धया
वित्तं मद्वशगं मितं कथमतः कर्तुं क्षमस्स्याममूम् ।
याच्नामाचरितुं न वाञ्छति मनस्सत्कर्मनिन्दापरै-
रिभ्यैस्संप्रति तत्रतत्र निबिडे ग्रामे पुरे ऽन्यत्र वा ॥ (३८)

संप्रत्याढ्यजनादनीतिबहुलैस्सत्कर्मनिन्दापरै-
रावीताद्वसु किञ्चिदप्यसुलभं त्रेते त्वदर्चातृषाम् ।
पान्थानां किमुदग्रकण्टकचितस्नुह्यावलीसंवृता-
च्चूतानोकहतः फलं सुमधुरं लभ्यं हि सौलभ्यतः ॥ (३९)

त्रेते तावकसत्क्रियां विदधतां सद्भूसुराणां महा-
गोष्ठीं मन्त्रविशेषघोषमहितां यान्तो भवन्ति द्विजाः ।
कर्मद्वेषतमोनुषक्तमनसोऽप्यास्तिक्यभानूदयाः
पुण्यापुण्यमयी मतिर्हि सदसत्संसृष्ट्यधीना नृणाम् ॥(४०)

वस्तुं सह्यभवातटे हरिहरक्षेत्राञ्चिते निस्तुले
तत्रैवाचरितुं क्रियास्तव सतीस्त्रेतेऽग्निहोत्रादिकाः ।
जातां पूरयितुं स्पृहां कथमहो शक्तो विना त्वत्कृपां
संपाद्यं हि गृहं तथेष्टिकुशलाः निष्पादनीया द्विजाः ॥(४१)

त्रेते देवि भवत्क्रियां विदधतस्तामग्निहोत्राभिधाम्
बाह्याभ्यन्तरशत्रवः कथमिव प्रादुर्भविष्यन्ति मे ।
निर्दग्धा ह्यभवन्नग्निप्रणयनप्रारम्भमुद्रासिना
सम्प्रोक्तेन सुगार्हपत्यमनुना वैश्वानरेणेव ते ॥ (४२)

त्रेते देवि तवान्वहं भगवति श्रेष्ठक्रियायाः कृते
स्तोमं गोशकृतां च हर्तुमिह मे तादृक्प्रयासः पुरे ।
नीवारादिपवित्रधान्यहरणे मेध्यस्सिलोञ्छात्मकः
कान्तारान्तरवासिनां सुतपसां यादृक्प्रयासो भवेत् ॥ (४३)

त्रेते सम्प्रति नाचिकेतचयनं कर्तुं समुत्कण्ठते
चेतो मे क्व नु तद्विधातुमुचितं स्वप्ने त्वमेवादिशेः ।
काण्डद्वय्युपपादितस्य महिमा यस्येव निष्कतवः
कस्यापीतरकर्मणश्श्रुतिषु किं कुत्रापि सन्दृश्यते ॥ (४४)

सद्विप्रांस्तव सत्क्रियासु निरतान् लोके विनिन्दन्ति ये
त्रेते सम्प्रति शिक्षितुं खलजनान्नैकोपि शक्नोति तान् ।
तस्मादम्ब नितान्तशिक्षणविधिस्तेषां तवैव क्रिया
वत्सोद्वेजकमत्कुणादिदमनं तन्मातृचर्यैव हि ॥ (४५)

त्रेते देवि भवत्क्रियामनुदिनं सायं च कल्ये मनः-
शुद्धिद्वारविमुक्तिमाप्तुमतुलां कुर्वन्ति ये भूसुराः ।
तेषां सम्पदिहानुषङ्गविधया पूर्णा समुत्पद्यते
छायां किं न दिशन्ति चूततरवः कल्पसाः फलार्थाअपि ॥

त्रेते प्रत्यहमर्चयन्ति भवतीं सद्ब्राह्मणा देवि ये
तेषामीप्सितमातनुष्व नितरामन्यानपेक्षं न चेत् ।
मुञ्चेयुः प्रतिबद्धकामितफलांस्त्वां केचिदालस्यतः
पुत्राणां ह्यपि तत्तदीप्सितकृतेः प्रीतिः पितर्यक्षता ॥ (४७)

सद्यस्सादितसत्क्रिया गतभियस्सद्विप्रनिन्दापराः
दृश्यन्ते खरताटकेयसदृशास्त्रेते द्विजन्माश्रमाः ।
सत्कर्मप्रथितादराः प्रशमितारिष्टा महापूरुषाः
श्रीमत्कौशिकरामलक्ष्मणसमाः प्रादुर्भविष्यन्ति किम् ॥

कृत्वा कुण्डलमण्डितं श्रुतियुगं हस्तं कमण्डल्वनु-
षक्तं मुद्रिकयाऽङ्गुलीञ्च घटितामायान्त्यमी दीक्षिताः ।
इत्येवं वचनं तिरस्कृतिधिया श्रुत्वा खलैरीरितम्
त्रेते त्वत्कृतिचुञ्चवः किल बहिर्गन्तुं त्रपन्ते द्विजाः ॥

त्रेते पुत्रकलत्रमित्रसदनान्यक्षय्यधान्यप्रद-
क्षेत्रारामसरांसि रत्नकनकाद्यन्यच्च वस्त्वैहिकम् ।
किञ्चामुष्मिकमिन्द्रचन्द्रभुवनाद्यास्त्यमुच्चावचम्
प्राप्तुं देवि विना त्वदर्चनविधिं नैवेतरत्साधनम् ॥ (५०)

कञ्चित्कालमियं त्वया मितधनेनोत्सर्जनीया न पू-
रित्येवं गुरुशासने निगमवत्प्रामाण्यमाबिभ्रता ।
स्नानाद्यर्हपवित्रतीर्थरहिते त्रेते त्वदीयक्रिया-
नर्हे कण्टकवत्पुरेऽत्र वसतिः कृच्छ्रान्मया तन्यते ॥ (५१)

नग्नः कर्मसु सत्सु नेक्ष्य इति यच्छ्रोत्रं वचः प्राविशत्
नग्ना वेदविवर्जिताश्च पुरुषाः पश्चाप्यकच्छादयः ।
इत्यर्थावगतिर्यदीयमनसि त्रेतेऽस्ति तस्यात्र मे
त्वत्कर्मावसरे पुरे भवति हा तादृक्षनग्नेक्षणम् ॥ (५२)

त्रेते सत्यमहं ब्रुवे कृतिषु ते नो जायते जातु चि-
द्दूरस्थेध्मकुशाहृतिप्रभृतिषु ह्यालस्यलेशोऽपि मे ।
अभ्याशे वसतस्त्वदीयकृतिषु श्रद्धाविहीनात्मनः
सन्द्रष्टुं धनिकान्महत्यलसता चेतस्युदेत्यन्वहम् ॥ (५३)

त्रेते देवि परित्यजन्तु भवतीं नाधीयतां च श्रुती-
र्नाभ्यस्यन्तु च दर्शनानि षडपि द्विष्युः पुराणानि च ।
श्रीरामायणभारतादि न पठन्त्वेते द्विजन्माधमाः
मा निन्दन्तु बहुश्रुतांस्त्वयि रतान्त्सद्ब्राह्मणाग्रेसरान् ॥

तन्वन्ति स्वयमेव ये क्षुरकृतिं स्वोपक्रमप्रक्रियां
वर्ज्यावर्ज्यविचारणाविरहिताः सर्वत्र ये भुञ्जते ।
त्याज्यं देशमटन्ति ये धनतृषा नुन्ना द्विजन्माधमा-
स्त्रेते त्वत्कृतिरेव निष्कृतिरये तद्दर्शनाद्येनसः ॥ (५५)

त्रेते स्वामिनि तावकीनकरुणा या भूपतेः कस्य चि-
च्चक्रे शात्रवकाननेषु महतीं दावानलप्रक्रियाम् ।
शास्त्राचारविरुद्धकार्यकरणे बद्धात्मनां दुर्नृणाम्
शुक्तच्चामांसमयेषु साऽद्य बिभृतां तूलेषु वातूलताम् ॥

त्रेताख्ये परदेवते तदुचितं किं यत्त्वदाज्ञा श्रुतिः
स्मृत्या साकमनिन्द्यधर्मनिरतैः सद्भिः पुरा याऽऽदृता ।
सेदानीं द्विजपांसुलैः निजमतिप्रामाण्यमेवान्वहम्
शंसद्भिः परिभूयते दनुभवैस्सख्या सहेवोर्वशी ॥ (५७)

सद्वंशे कलितोद्भवाः कृतपदन्यासाश्च शास्त्राध्वनि
त्रेतेऽमी द्रविणार्जने तत इत स्सन्नद्धकच्छा द्विजाः ।
श्रुत्यर्थं धनिनां यथाभिमतमेवाख्याय तेषां मनां-
स्यावर्ज्याहह मोक्षसम्पदमिव प्राप्ता लभन्ते मुदम् ॥ (५८)

यातुं देशमनार्यमार्यचरितान्देशानिवात्तार्तवा-
मेवोद्वोढुमपि द्विजन्मतनयां शूद्रादिकन्यामिव ।
चण्डालादिपयश्च सोममिव ये पातुं निबद्धाशया-
स्तेषां देवि मनोरथः क्वचिदपि त्रेते न संसिध्यतु ॥ (५९)

कालेऽस्मिन्नपि पूर्वपूरुषपरिक्षुण्णान्मनाग्वर्त्मनो
व्यत्येतुं श्रुतिषु स्मृतिष्वपि सतीं दृष्टां विहातुं क्रियाम् ।
अत्तुं शास्त्रनिषिद्धमन्नमटितुं दुष्टं प्रदेशंच ये
त्रेते बिभ्यति वाञ्छितं द्विजनुषां तेषां सदा सिध्यतु ॥

कौटिल्यं कलिकालसम्भवमिदं निन्दन्ति शूद्रा द्विजान्
तत्राप्यार्यमतस्थितद्विजवरान्निन्दन्त्यनार्यद्विजाः ।
तत्रापि त्वदुपासकान्भगवति त्रेते वरिष्ठान् द्विजान्
निन्दन्त्यार्यमतान्तरेव कतिचिद्वृत्तिं नटन्तो द्विजाः ॥ (६१)

त्रेते सम्प्रति के चन स्वमतितः कार्यव्यवस्थापनम्
कर्तुं भूसुरबन्धवः प्रयतनं तन्वन्तु नामाधिकम् ।
सिद्धिं नैव पुनर्भजेयुरिति मे निर्णीतिरस्त्यच्युता
यःशास्त्रेति जगौ यत स्सभगवान्गीतासु गीतागुरुः ॥ (६२)

त्रेताख्ये परदेवते भगवति त्वामर्चतामास्तिक-
श्रेष्ठानामतुलाऽस्तु कीर्तिरनघा वाग्वैखरी संततम् ।
निस्सामान्यजयस्सभासु सकलास्वस्तोकमामुष्मिकम्
सौख्यं चैहिकमद्भुता चतुरता सर्वासु विद्यासु च ॥ (६३)

रुद्रोवा इति देवि वेदवचसा त्रेते त्वदीये तनू
घोराऽन्याच शिवा परा च विदिते ये तत्र घोरां तनुम् ।
दुष्टानां पुरतः प्रदर्श्य जहि तान्मुक्तत्वदाज्ञान्पुरः
शिष्टानामितरां प्रदर्श्य परिपाह्याज्ञारतांस्तांस्तव ॥ (६४)

त्रेते निन्दति कर्म यस्तव पुन र्विष्णुं विनिन्दत्यसौ
ब्रूते विष्णुवितानयोर्भगवती यस्मादभेदं श्रुतिः ।
यस्ते निन्दति सेवकं द्विजमणिं निन्दत्यसौ शङ्करम्
यज्वाह्यष्टतनोः परा भगवती मूर्तिर्भवत्यष्टमी ॥ (६५)

त्रेते देवि भवत्यजस्रमखिलं भव्यं दिशत्यर्चते
त्वां निष्कैतवमित्यसौ भगवती स्पष्टं ब्रवीति श्रुतिः ।
विश्वासं परिपूर्णमाकलयता तस्यां श्रुतौ तन्मया
दैन्यं दुर्धनिनां किमर्थमसकृत्सन्दर्श्यमग्रे मुधा ॥ (६६)

त्रेते विन्यदधुः कदाचिदमरा वामं समस्तं वसु
त्वय्येवेति यतः श्रुतिर्भगवती ब्रूते ततस्ते पुनः ।
त्वत्सेवानिरतात्मभूसुरवरा भूत्वा लभन्तेतराम्
त्वत्तो वस्त्विति तर्कये कथमपि प्राप्यं हि वित्तं निजम् ॥

यावज्जीवमिति श्रुतिं भगवति श्रुत्वा त्वदीयक्रियाम्
त्रेते हातुमिदं कदाचिदपि मे नोत्कण्ठते मानसम् ।
श्रुत्यन्तान्तरवस्थितं यदहरित्येतं वचस्तल्लजम्
श्रुत्वा मुक्तिनिदानमाश्रममपि प्राप्तुं भृशं सत्वरम् ॥(६८)

हाहा कष्टमिदं त्रिलोकजननि त्रेते त्वदीयक्रिया-
शिष्टं न ह्यमृतं पयः क्वचिदपि प्रेक्षे द्विजानश्नतः ।
आगोपालपपि त्वमूत्नरपशून् शिष्टागृहीतैर्न वै-
श्चूर्णैरन्वितमीषदुष्णमुषसि प्रेक्षे पयश्चूषतः ॥ (६९)

त्रेते त्वां भजतां सदा क्षितितले किं दुर्लभं भावुकम्
यच्छ्रद्धामधिकाधिकां जनयितुं सत्कर्मवाञ्छावताम् ।
अस्माकं सरणौ विशेषलवणं संप्रत्यपेयं जलम्
विघ्नेशानधुनीगतं सुमधुरं सन्दर्शयस्यद्भुतम् ॥ (७०)

त्रेते देवि भजन्ति ये भगवतीं निष्कैतवं त्वां द्विजाः
सोमच्छागपयोघृतप्रभृतिभिर्वैधैर्हविस्तल्लजैः ।
क्षेत्रारामगृहादिवस्तुनिचयं तेभ्यः प्रदायाक्षयम्
दुष्टानां दुरवापमैहिकसुखं कुर्याः परस्मात्परम् । (७१)

सोमाद्युत्तमहव्यमेदुरतमां त्रेते त्वदीयक्रियाम्
मन्त्रार्थावगमप्रकाशमतयस्तन्वन्ति ये भूसुराः ।
तेषां पाणितलस्थितामलकवन्मुक्तिर्ह्युपामेति सा
कारुण्यामृतवर्षिणी भगवती स्पष्टं ब्रवीति श्रुतिः ॥ (७२)

ये त्वां निष्कपटं भजन्ति जगति त्रेते द्विजन्मोत्तमा-
स्तेभ्यो वित्तमनुत्तमं वितरितुं हस्तौ स्वकीयावुभौ ।
वस्वापूर्णतमौ विधाय लससीत्याशङ्क्यसे त्वं ह्युमा-
हीत्यादिश्रुतितत्त्वजार्थमतिभिस्सद्भिर्विशुद्धान्तरैः ॥ (७३)

त्रेताख्ये परदेवते प्रतिदिनं मन्त्रार्थबोधान्विताः
श्रद्धाप्रेरितमानसा द्विजनुष स्त्वत्कर्म ये पावनम् ।
सेवन्ते भुवि वाञ्छितं न सकलं तेषां मुधा जायते
सत्यास्सन्त्विति वेदवाक्यमसकृत्स्पष्टं यदाघुष्यते ॥ (७४)

त्रेते देवि घनाश्मसंघनिबिडे देशेऽपि मध्ये मना-
ङ्मृत्स्नासङ्गवशाद्यथा तृणचयः प्रादुर्भवत्युच्चकैः ।
क्रौर्यानार्जवकामकोपबहुलस्वान्ते तथा पुंस्यपि
त्वत्कर्मोत्थितपुण्यसंगतिवशादुच्चैर्वसूत्पद्यते ॥ (७५)

त्रेते देवि महान्ति ते रचयितुं कर्माणि मे सांप्रतम्
वाञ्छाऽस्ति क्षितिपा न दर्शनपथं यान्त्यर्थिनामिष्टदाः ।
विप्राश्च प्रभुताजुषस्तव कृतिष्वासादितानादराः
कृष्याद्यर्धनमर्जितुं न सचिवस्साधुः किमातन्यताम् ॥ (७६)

ज्ञानाभासलवावलेपनिभृता स्सन्त्यक्तसन्ध्यादयो
मूढेभ्यस्समवाप्तयोग्यनुभविब्रह्मादिनानाभिधाः ।
त्रेते ब्राह्मणबन्धवोऽपि कतिचिन्निन्दन्ति यत्तेऽर्चका
नात्मोपासनया सह द्विजवरानेष प्रभावः कलेः ॥ (७७)

त्रेते जातमजातमम्ब भवती बाह्यं तथाऽऽभ्यन्तरम्
वैरिव्रातमतिद्रुतं प्रणुदतु प्राप्तानुकम्पा मम ।
नैवं चेत्पुनरीदृशार्थमसकृद्व्यक्तं वदन्तीश्श्रुती
र्विश्वस्यात्कलिना वृतेऽत्र समये को वा कथं वा क्व वा ॥

मेरौ वास्तु मरावुतास्तु मनुजः प्राप्तव्यमेवाश्नुते
वित्तं नोरु नचाणु वेति विदितादृष्टस्वभावा अपि ।
किं तत्कार्यमिदं विधेयमधुना किंवेति वित्तार्जने
कामं विह्वलमानसा वयमिमे त्रेतेऽम्ब वर्तामहे ॥ (७९)

एतां विह्वलतां निवर्तय भृशं मन्मानसस्यापिच
श्रद्धां वर्धय तावकीनकृतिषु त्रेतेऽग्निहोत्रादिषु ।
याच्नां काञ्चिदितस्ततः कलयितुं वाञ्छाविहीनात्मनोऽ-
प्येकं सोममखन्तु साग्निचयनं कर्तुं स्पृहास्त्यद्य मे ॥

अर्कोवा इति वाक्यतश्श्रुतिगतात्त्रेतेऽम्बिकेऽर्कं तथा
रुद्रोवा इति वाक्यतश्च भवतीं रुद्रंच मन्यामहे ।
तस्मादर्च्यतमा त्वमेव जगतां दुःखापहन्त्री तथा
नान्ये देवगणास्त्विवति प्रविशदं जानीमहे सांप्रतम् ॥ (८१)

त्रेते तावककर्मबोधनपरान्वेदान्समभ्यस्यताम्
मन्त्राणां विनियोगमर्थमपि च ज्ञातुंच तन्द्रावताम् ।
प्राणामपि देवतोत्सवदिनेष्वाम्नायपारायणम्
मन्ये यंयमितिश्रुतिश्रवणतस्संयुक्तमुच्चैः फलैः ॥ (८२)

त्रेते तावककर्मणामनुगुणानर्थानवाप्तुं परान्
कृष्यै यत्नमुदग्रमाकलयतां तन्द्राविमुक्तात्मनाम् ।
वित्तं भूरि भवेदिहेति परमां निर्णीतिमाचक्ष्महे
यद्वेदोक्तिमतल्लिकां कृषिमिदित्याकर्णयामः स्फुटम् ॥ (८३)

त्रेते देवि कुशाग्रतुल्यमतिरप्यार्यान्ववायोद्भवोऽ
प्यन्याय्यां सरणिं नितान्तमयते वित्ताधिगत्यै जनः ।
साहाय्यं तनुतेऽधिकंच वसुना वाचा च तस्येतरः
श्रीमानार्यजएव यत्कलिविभो स्मा सम्पदन्यादृशी ॥ (८४)

त्रेते कश्चन वक्ति विप्रतनयापाणिग्रहः शैशवे
दीर्घं हन्ति सुमङ्गलात्वमिति न त्वावेत्ति दुष्कर्म सः ।
आयुर्ह्रासकमग्र्यबान्धवततेः प्रासार्तवाग्र्यात्मजा
कल्याणस्य च सङ्करत्वकरतां कालस्य कौटिल्यतः ॥ (८५)

क्षेत्रारामगृहाणि रत्नरजतस्वर्णानि पट्टाम्बरा
ण्यत्यन्तप्रियकिङ्करास्सुतनयास्साध्वी प्रिया सन्त्सुहृत् ।
विद्याः पञ्च नवापि चायुररुजं दीर्घं तथा चेतरत्
त्रेते त्वत्करुणा भवेद्यदि तदा किं दुर्लभं वस्तु नः ॥ (८६)

यत्पातुं यमपाशपाशितमृषेःसूनुं भ्रमन्तं महा
लिङ्गात्तत्परिपूजितादुदितवत्पीयूषकुम्भीपुरे ।
देव्या मण्डितवामभागमखिलैरस्वाऽभिराम्या लस-
त्यन्तस्तत्प्रतिभासतां मम परं त्रेताभिधानं महः ॥ (८७)

यच्छ्रीकाषिपुरे द्विजस्य तनयं बालं रुदन्तं पयः
स्तन्यं पातुमुदग्रया करुणया गौरीगिरीशात्मना ।
आविर्भूय पुनर्जनुर्मृतिहरं ज्ञानामृतं पायया-
मास ज्योतिरजस्र मस्तु पुरतस्त्रेताभिधं तत्परम् ॥ (८८)

कैलासेऽपि चिदभ्रपञ्चनदयोः काश्यांच वृद्धाचले
काञ्चीकालकरीन्द्रशोणगिरिषु श्रीवाञ्छ्यमायूरयोः ।
छायावेदकदम्बकाननसितारण्येषु मध्यार्जुने
जम्बूकाननवैद्यनाथकमलागेहेषु रामेश्वरे ॥ (८९)

गोकर्णेऽपि च दारुकाननवटाटव्योर्मरुत्पत्तने
केदारेऽपि च कुम्भघोणनगरे श्रीशैलकालेशयोः ।
शोणारण्यसुधाघटाजनगरीश्रीकाषिवंशाटवी
वेदाद्रिष्वपि मुक्तिदाऽसि जगतां त्रेतेऽम्ब लिङ्गात्मना ॥

रङ्गे चम्पककानने बदरिकाकाञ्चीनृसिंहाचले
द्वारावत्यहिराजपत्तनजगन्नाथेषु शेषाचले ।
श्वेताद्रौ मधुराजनार्दनहरिद्वारेष्वनन्ताटवी
श्रीमुष्णादिषु विष्णुरूपमहिता त्रेतेऽवसि त्वं जगत् ॥(९१)

त्रेते ब्राह्मणपुङ्गवैरहरहस्सम्पूज्यसे यैः शुचि-
स्वान्तैर्दम्भफलस्पृहाविरहितैरध्यात्मविद्यारतैः ।
तेभ्यो मुक्तिमखण्डचित्सुखमयीमन्ते प्रदास्यन्त्यपि
क्षेत्रारामगृहादिसम्पदमिह त्वं सांप्रतं यच्छसि ॥ (९२)

श्वेतारण्यसभान्तरे स्थितवतां गोब्राह्मणाद्याकृति-
प्रच्छन्नातिमनोहरात्मवपुषामिन्द्रादिनाकौकसाम् ।
उद्भूतामपहर्तुमेव बलिनो भीतिं मरुत्वासुरा-
द्घोरं वैरिजनस्य रूपमबिभस्त्रेते श्रितानां शिवम् ॥ (९३)

यस्त्रेते भवतीं भजत्यकपटं स ब्राह्मणाग्रेसरः
पृथ्व्यां भूर्युपभुज्य सौख्यमतुलं पृथ्व्याः खमारुह्य खात् ।
द्यामारुह्य च तत्रतत्र विबुधैः स्थित्वा सुखेनामुतः
स्वर्ज्योतिः श्रयतीति निश्चिनुमहे श्रुत्या पृथिव्याइति ॥

स्कन्दाद्रौ फलिनीवने शिखिगिरौ श्रीचेन्दिपुर्यामयि
त्रेते काञ्चिपुरे तथा रणपुरे श्रीवैद्यनाथालये ।
कल्हाराद्रिशिरस्यमेयमहिमा बालादिरूपाद्भुतः
स्वामी भासि विदारयस्यनवधिं व्याधिं श्रितानां नृणाम् ॥

त्रेते तावकमर्चनं विदधतामस्मिन्कथं दुर्लभम्
लोके वस्तु गृहादि यद्ध्यसुलभं शक्रादिलोकान्तरे ।
वस्त्वन्यक्षयमद्भुतं च परमं निर्यत्नलभ्यं भवे
दित्येवं श्रुतयस्तथा स्मृतिगणाः प्राहुः पुराणानि च ॥ (९६)

ऋक्शाखांच यजूंषि साम च यथाशास्त्रं न चाधीयते
श्रौतान्यप्यखिलानि नैव भुवने जानन्ति निष्कल्मषं।
आर्त्विज्यादिषु न द्विजाः क्रतुषु च श्रद्धाभयाद्यन्विताः
त्वेते तावकककर्मसु प्रतनुमस्सक्तिं तथापि स्थिराम्॥ (९७)

अन्नं किञ्चन दीयते जगति यत्त्वेतेऽम्ब कस्मै चन
क्ष्मादेवाय परत्र शाश्वतसुखं तस्मिन्विधातुं क्षमे।
अत्युच्चास्पदवासिनां क्रतुभुजां संघाय दत्तं हवि
र्मन्त्रै स्संस्कृतमक्षमं जनयितुं किम्मुक्तिसौख्यं परम्॥

त्रेते त्वं जनकस्त्वमेव जननी भार्या त्वमेव प्रिया
त्वं सूनु स्तनया त्वमेव भवती भ्राता त्वमेव स्वसा।
त्वं मित्रं च गुरुस्त्वमेव नृपतिः शिष्यश्च भृत्यस्तथा
त्त्वेत्राद्यं वसु यत्सुखं मम भवत्तैस्तत्कुरु त्वं सदा॥ (९९)

या कार्येषु धियः प्रचोदयति नः साधुष्वसाधुष्वपि
प्राक्कर्मानुगुणं भृशं सवितुरप्याराधनीया च या।
स्वाविद्यां सकलां च भर्जयति या तत्कार्यमप्यद्भुतं
ध्यायामः परमां हितां मनसि तां त्रेताभिधां देवताम्॥

यस्त्रेतास्तुतिमद्भुतार्थविषयां नानाप्रकारान्विता
कल्याविगतदुर्नयप्रशमनीं भक्त्या पठत्यन्वहम्।
तस्य स्वान्तमिदंकवेरिव सदा सत्कर्मसु स्वादरं
शिष्टाचाररतं प्रशस्यमखिलस्त्रेताप्रसादाद्भवेत्॥ (१०१)

## कलिनिग्रहः

ओंकारवाच्याय सुरासुराद्यैराधनीयांघ्रिसरोरुहाय ।
नमस्त्रयीधर्मविभेदिभेत्रे नारायणायास्तु सहस्रकृत्वः ॥ (१)

ओंकारमन्त्रपञ्जरकीराय नमः सतां सदा वसते ।
मनसि भगवते दुर्जनरिपवे नारायणायास्तु ॥ (२)

ओंकारचिन्त्याय पदांबुजन्मसच्चिन्तचिन्तामणयेऽनुवेलम् ।
नमः सुमास्त्रान्धककालहन्त्रे शिवाय भर्त्रे जगतां त्रयाणाम् ॥

नमः सतां शरीरिणे पुरातनाय कर्मणे
सते त्रयीवरांगनाकचावलीलसन्मणे ।
गिरीन्द्रजासमृद्धिमत्सुभद्र रुद्र ते सदा
समन्यवे सनातनप्रकृष्टधर्मविद्विषाम् ॥ (४)

वसुधे कथमिव दधसे वसुधासुरवंशजान्कलेर्बन्धून् ।
पूर्वाचारविभेत्तृन्कांश्चन पापान्कुतस्तु न हिनस्सि ॥ (५)

मन्वादिभिः स्थापितधर्मसेतून् भेत्तुं खलाः के चन ये यतन्ते ।
अब्देवताः सर्वनिलिंपरूपास्तान् भिन्त यूयं विधया कयापि ॥

केचिद्यथेच्छं विलपन्ति मत्ताः विभेदनं प्राक्तनधर्मसेतोः ।
तान्भस्मसादातनु वीतशंकं पलालकल्पानविलंबमग्ने ॥ (७)

प्रभञ्जन फलैः सुमैः किसलयैः पलाशैस्तथा
परोपकृतिकारिणो जगति मा स्म हिंसीर्द्रुमान् ।
मनुप्रभृतिभासितान्महितधर्मसेतून् हठात्
विभञ्जयितुमुद्यतान् खलजनान् द्रुतं भञ्जय ॥ (८)

महाबिल महाबिले खलजनानमून्पातये:
तुरुष्कयवनान्तिमैः पललमद्यवांछावशात् ।
सजग्धिषु सपीतिषु स्फुटमशंकमुत्साहिनः
सदाचरणधर्मभित्प्रणयिनः कलेर्बान्धवान् ॥ (२)

भूलिंगैकाम्रनाथ प्रसभमयि जहि प्राक्तनाचारभेत्तॄन्
जंबूनाथाम्मय त्वं दलय नवदुराचारपद्याचिकीर्षून् ।
शोणाद्रीशाग्निलिंग त्वमिह दह खलान्वर्णसांकर्यकर्त्तॄन्
वाय्वीशाभ्रेश भिन्तं श्रुतिमहिमहतौ बद्धदीक्षान्युवां च ॥

भूलिंग भूम्यामुरुकण्टकैश्च श्वभ्रेषु पूर्णेष्वलिवृश्चिकैश्च ।
वर्णाश्रमाचारविभेदिदुष्टान् निपात्य संपूरय तानि मृद्भिः ॥
अब्लिंग पाथोमयमूर्तिरद्रीन् भिनत्ति या ते महतो जगत्याम् ।
सद्धर्मभेत्तॄन्पयसां निधेः सा निमज्जयत्वन्तरथो भिनत्तु ॥(१२)
तेजोमयापीतकुचापते ते तेजोमयी मूर्तिरुदग्रकीला ।
सद्धर्मभेत्तॄन् शलभोपमानान् भस्मावशेषान् त्वरितं करोतु ॥
वातेश वातात्मतनुर्विभो या श्रीकालहस्तीश महीयसोपि ।
भनक्ति सालान्सहसा क्षितौ सा भनक्तु सद्धर्मविभेदिदुष्टान् ॥

आकाशलिंगाभ्रसमानदेश या ते तनुः शब्दगुणा विभुश्च ।
अनादिशब्दातिशयापहन्तॄन् नामावशेषान् प्रसभं करोतु॥(१९)
प्राचीनसद्धर्मविभंगसज्जान् प्रभञ्जनाभञ्जय दुश्चरित्रान् ।
छायादिभिः सर्वसुखावहानामनोकहानां कदनं विहाय ॥ (१६)

फलैः पतंगानधनान्पलाशैश्छायाभिरध्वन्यजनानवन्तम् ।
अमुं वटं मारुत किं भनक्षि विहाय सद्धर्मविभेदिनः खलान् ॥

अमून् खलान् प्राक्तनधर्मलोपनिबद्धकच्छान्पवमान भङ्क्तुम् ।
स्वयं प्रवर्तस्व सुतं दशास्यवनान्तकं वाऽऽदिश माऽऽस्व तूष्णीम्

हालास्यनाथाद्य महाप्रसिद्धसिद्धस्वरूपं परिगृह्य शीघ्रम् ।
विचित्रलीलाभिरनादिधर्मभेत्तॄन्विमोह्यास्व सतां शरण्यः ॥

दत्तात्रेय समस्तसज्जनततेः संरक्षकः सांप्रतं
योगीशानवपुर्धरः प्रकटयन्नात्मानमत्यद्भुतम् ।
दुष्टान्भञ्जय पूर्वधर्मदलने सन्नद्धकच्छानमून्
शिष्टान् रञ्जय पूर्वधर्मचरणप्रोत्साहधुर्यात्मनः ॥ (२०)

शंभुः शंकरलोकगुर्ववयवं धृत्वा पुरा दुर्मता
न्युद्भूतानि बलादपोह्य तदनु त्वत्कन्दरां प्राविशत् ।
दत्तात्रेय किलाद्य तं प्रहिणु वा साधूं श्च संरक्षितुं
दुष्टान् प्राक्तनधर्मभञ्जनचणान् सर्वांश्च संशिक्षितुम् ॥ (२१)

ओमित्युन्नतिहेतुमन्वहममुं श्रीमन्त्रराजं जपन्
प्रस्थानत्रयभाष्यसंज्ञममृतं मोक्षेषिणामर्पयन् ।
अद्वैतार्थमहानिधिं श्रुतिशिरोखन्यन्तरावस्थितं
यः प्राचीकशदद्य शंकरगुरुः सः स्यात्सतां पालकः ॥

बोधायनो वा सह शिष्यवर्गैः कात्यायनो वा सह मित्रवर्गैः ।
वैखानसो वा सह बन्धुवर्गैः प्राचीनसद्धर्मभिदो भिनत्त ॥

आश्वलायनमुनेर्मनुराशेः आश्वलातसमशापशिखावान् ।
तूलजालसदृशान्दहतु प्राग्धर्मसेतुभिदुरान् कलिबन्धून् ॥
आविर्भवन्सामविदग्रणीः समं द्राह्यायणो वा परिशिष्टकारैः ।
प्राचीनसद्धर्मविभेददीक्षान् शापाग्निदग्धान् प्रसभं करोतु ॥
आपस्तंबमुनिर्वा सत्याषाढो दधीचि रुत कुशिकः ।
भारद्वाजमुनिर्वा भिनत्त सद्धर्मभदसंनद्धान् ॥ (२६)
कश्यपविश्वामित्रावत्रिभरद्वाजगौतमाः पञ्च ।
जमदग्निवसिष्ठौ द्वावेते सप्तर्षयः खलान् घ्नन्तु ॥ (२७)
ब्राह्मीचामुण्डाभ्यां माहेश्वर्या तथैव वैष्णव्या ।
कौमार्या वाराह्या शच्या च खलाः समेऽपि हन्यन्ताम् ॥
सप्तर्षयः सप्त कुलाचलाश्च सामानि सप्तांबुधयश्च सप्त ।
छन्दांसि सप्त स्वरसप्तकं च भिन्दन्तु सद्धर्मभिदः समस्तान् ॥
समिधः सप्त च जिह्वाः सप्त च सप्तर्षयश्च धामानि ।
सप्त च सप्त च होत्राः शतधा भिन्दन्तु धर्मसेतुभिदः ॥
पाकाः सप्त हवींषि सप्त च तथा सोमाश्च सप्तोर्ध्वगाः
लोकाः सप्त तथाऽधराः दिविषदां गावो नृणां सप्त च ।
सप्त व्याहृतयश्च सप्त तुरगाः प्राणाश्च सप्तार्चिषो
होतारोऽपि च सप्त नूतनदुराचारप्रियान् घ्नन्त्वमून् ॥
शचीपतिर्वा ज्वलनो यमो वा रक्षःपतिर्वा वरुणो मरुद्वा ।
यक्षेश्वरो वा निटिलेक्षणो वा विधि र्हरिर्वाऽस्त्वसतां विभेत्ता ॥

ऐरावतो वाप्युत पुण्डरीकः सवामनो वा कुमुदोऽञ्जनो वा ।
सपुष्पदन्तोप्युत सार्वभौमः ससुप्रतीकोऽस्त्वसतां विभेत्ता ॥
दिवाकरो वा रजनीकरो वा भौमो बुधो वाऽमरदेशिको वा।
शुक्रः शनिर्वाऽथ विधुन्तुदो वा केतुग्रहो वाऽस्त्वसतां विभेत्ता॥
मत्स्यो वा कूर्मो वा कोलः सिंहोऽथ वामनो रामः ।
रामो रामः कृष्णः कर्की वा स्यादसद्विदारयिता ॥ (३६)
धर्मात्मजो वा पवनात्मजो वा शक्रात्मजो वा नकुलोऽथवाऽस्य।
स वा कनीयान् सहदेवनामा भिनत्तु सद्धर्मविदारणोत्कान् ॥
सद्योजातो देवः सद्योजातान् भिनत्तु धर्मभिदः ।
विदलयतु वामदेवो वामाचारेषु तत्परान्सहसा ॥ (३७)
घोरोऽप्यघोरदेवः सद्धर्मविभेदमानसान् हन्तु ।
तत्पुरुषः सत्पुरुषप्रीतिरसत्पुरुषनिचयमाथी स्यात् ॥ (३८)
विद्यानां सर्वासां भूतानामपि पतिः समस्तानाम् ।
ब्रह्मातिशयविभेत्तॄन् ब्रह्मेशानः सहस्रधा भिन्द्यात् ॥ (३९)
ये रुद्रा भुवि सन्ति भक्ष्यमिषवो येषां च ये सन्ति खे
येषां चैव समीरणः शरचयो ये सन्त्यमेया दिवि ।
येषां वर्षमिषूभवत्यनुदिनं तेभ्यो नमः सर्वतः
तेषामाननगह्वराणि सहसा गच्छन्तु धर्मद्रुहः ॥ (४०)
ईदृङ्चेतिश्रुतिभिर्नवचत्वारिंशदीरिताः मरुतः ।
ये ते संभूयैव त्वरितं भञ्जन्तु दुर्मतावेशान् ॥ (४१)

सन्त्येकादश ये त्वदीयपुरुषाः प्रभ्राजमानादयः
सन्त्येकादश याः स्त्रियः पवन ते प्रभ्राजमान्यादयः ।
तैः स्वैः संप्रति पूरुषैः परिवृतः स्त्रीभिश्च ताभिः समं
प्राक्सद्धर्मविभेदसज्जमनुजानक्लेशमाभञ्जय ॥ (४२)

इज्यादिसद्धर्ममवीवृधन् ये स्वानादयः सोमलतां समर्प्य ।
ते वाऽद्य गन्धर्वगणाः समस्तान् प्राचीनसद्धर्मभिदो विभिन्द्युः ॥

यदा यदा हीति वचो निशम्य गीतागतं नो विशये तथापि ।
न दृश्यते श्रीभगवानिदानीं क्वापीति दुःखोत्तरलान्तरोऽस्मि ॥

आविर्भूय यथा पुरा यदुकुले कंसादिधर्मद्रुह :
संहृत्यावनिभूरिभारमपहृत्यातिष्ठिपत्सत्क्रियाम् ।
तद्वत्संप्रति भारते हरिरसौ खण्डे समुद्भावयन्
आत्मानं बहुदुर्मतानि दलयन् सद्धर्ममुल्लासयेत् ॥ (४२)

अंभसि न बंभ्रमीति ग्रावा नावा न गम्यते स्थल्याम् ।
तद्वद्दुर्जनजल्पितमभिगन्तुमिदं प्रमाणपदमनलम् ॥ (४६)

मुरासुरो वा नरकासुरो वा वलासुरो वा बकराक्षसो वा ।
जटासुराद्याः द्विजबन्धुरूपाः सन्त्यद्य ते कैश्चिदलं प्रहार्याः ॥

निर्भीकमेके पललान्यदन्ति पिबन्ति मद्यानि परे सलीलम् ।
भिन्दन्ति धर्मान् द्विजबन्धवोन्ये तान् हन्तु विष्णुर्विधया कयापि॥

सांकर्यं बहुधा सजग्धिषु तथा कर्तुं सपीतिष्वमी
चण्डालादिभिरुद्यताः कति चन ब्रह्मब्रुवा जाग्रति ।

अर्हा शूद्रतुरुष्कपंचमजनैः संभूय साकं द्विजैः
त्रय्यध्येतुमिति ब्रुवन्ति कति चि त्ते कृष्ण शिक्ष्यास्त्वया॥
वयं शूद्रचण्डालहूणादिलोकैः समं भुक्तिपीतिक्रियाबद्धकच्छाः।
भवामोऽधुनेत्यस्तशंकं प्रमत्ताः परे चक्षते तान् जहि त्वं मुरारे॥

सन्तः सर्वे जगति वसुधे सन्निधातुं पदानि
त्वय्यात्मीयान्यधिगतभियश्चक्षते मन्त्रमेकम्।
पादस्पर्शापनयसहनप्रार्थनारूपमेवं
सत्यंव त्वं धरसि नु कथं धर्मभिद्विप्रबन्धून्॥ (५१)

शतं रक्ष्याः स्मस्ते वरद ननु भक्ता इह वयं
शरक्षुण्णाः कार्याः वनजमुख दुष्टाश्च भवता।
त्रयीधर्मानुत्क्राशरवचसि तीव्रेण भवसि
स्फुटं कोपेनेद्धः शरवणभव त्वं न हि कुतः॥ (५२)

शरवणभव देवान् पाहि सद्धर्मनिन्दा-
रवणभवशरीरातंकसद्विप्ररूपान्।
वनभव शरणाद्युन्मत्तदुर्विप्ररूपा
नभव शरवरैस्त्वं निर्दयं छिन्धि दैत्यान्॥ (५३)

व्याख्या—वनभव=गंगापुत्र शरणादिभिः=गृहादिविभवैः
उन्मत्तदुष्टविप्ररूपान् अभव=परमार्थतः उत्पत्तिरहित
भव शरवणकीलैः प्रोषको धर्मनिन्दा-
वशरवणभरान्धान्धात्मनां दुर्द्विजानाम्।

शरवणभव भूयाः पालकः श्रुत्युदीत-
प्रथितमहितकर्मश्रद्धसद्भूसुराणाम् ॥ (९४)

करिमुख खलाः पिण्डीकार्याः समेधितदुर्धियः
श्वपचसदृशाः धीरं भङ्क्तुं त्रयीगतगौरवम् ।
तिर इतइतो हुंकृत्यार्यान् चरन्त इमे सफट्-
कृति विदलितस्वार्थास्ताड्या विहाय दयां त्वया ॥ (९५)

सुमित्राणि ब्रूध्वं समुपनत आम्नायपठनैः क
ओजस्वीषद्वा धनकर उपायस्त्विवति जडाः ।
समस्ता जल्पन्त स्सततमिह तिष्ठन्तु न तथा
वदामो ह्यध्येया श्रुतिरियमहेतु द्विजकुलैः ॥ (९६)

दुष्टाः कर्मिषु बद्धमत्सरभरास्तत्रापि निस्तन्द्रिताः
त्रय्याधिक्यविलोपने च निभृताः स्वस्मै प्रभूतेर्ष्यया ।
गृह्याचार्यमुनिव्रजाय सुतरां धैर्योद्धतास्सन्ति तान्
व्यस्मार्षीः किमु मर्दयेश्वर पदद्वन्द्वेच्छुतुष्टिप्रद ॥ (९७)

यं श्रुत्याः गुरुतां प्रमा श्च महितां मार्ष्टुं सभावक्रियं
सांकर्यप्रसितं सकृत् द्विरथवा द्विष्मः स शिक्ष्यस्त्वया ।
आस्तिक्यामलमानसं द्विजमणिं सत्कर्मबद्धस्पृहं
शंसामो यमुदारमीश भवता संरक्षणीयः स तु ॥ (९८)

नियमितकरणा ये नित्यनिर्धूतपापाः
श्रुतिमुखरमुखाब्जाः शस्यकृत्याः व्यराजन् ।

अवशकरणपूगाः निन्द्यवाचोऽद्य जाताः
बत जगति कुकृत्याश्चान्वयेष्वेव तेषाम् ॥ (५९)

क्व चिद्भूमीभागे भगवदवतारो यदि भवे
त्तदाऽमी विप्राणां कथमिव हि वंशे जनिमियुः ।
कथं वा वर्णानां तनुयुरिह सांकर्यमधिकं
कथं वा कल्पेरन् श्रुतिविहितधर्मान् दलयितुम् ॥ (६०)

कालेयी वंचनाऽहो कति चिदिह नराः सेवनाद्यैरुपायै-
रिभ्यानावर्ज्य तादृग्गुरुतरबिरुदान्यप्यनर्हाः लभन्ते ।
के चिद्वैतालिकानां चरितमधिगताः पापकृत्यान् धनान्धा-
निन्द्रोपेन्द्रादितुल्यं धनचयनचणाः संस्तुवन्तश्चरन्ति ॥ (६१)

तैलाभासान्विचित्रास्वहह विदधतः काचकूपीषु के चित्
कुर्वन्तस्त्रप्वमत्रेष्वतिलघुषु तथा दन्तशुद्ध्यर्थचूर्णम् ।
लेह्याभासान्वहन्तो रचितधनिजनावर्जनाः पङ्क्तिमेकां
वैद्यग्रन्थेष्वबुध्वा कनकबिरुदमप्यर्जयन्त्यस्तलज्जाः ॥ (६२)

उपास्त्युपेतेष्वतमोरजस्सु विशेषतो विस्तृतशीतदृष्टिः ।
इमानशेषद्विजबन्धुवेषान् भिनत्तु सद्धर्मभिदः स सोमः ॥ (६३)

विष्णो पालनधर्ममेव परमं वोढुं प्रवृत्तोऽस्यतः
कालेऽस्मिन् बहुदुर्मतत्वयकृतं स्रष्टुं पुमांसं वरम् ।
नोद्योगं तनुषे तथापि समयः सृष्टिक्रियास्वीकृतेः
प्राप्तस्तादृशमातनुष्व पुरुषं तादृक् पुमान्वा भव ॥ (६४)

## विध्युपालंभपञ्चकम्

विधे तव विधिं न कश्चिदपि शक्नुयादन्यथा
विधातुमनिशं वसन्रजतशैलसानुन्यपि ।
धनाधिपसखोऽपि सन्निजकरे सुवर्णाचलं
वहन्नपि परेश्वरो यदटति स्म भिक्षां प्रति ॥ (१)

विभाति महिमा विधे तव महोनसाधारणो
यतः परमपूरुषो रघुपतिः स्वराज्याद्गलन् ।
भयानकवनान्तरे वसतिमाप्य तत्रापि च
स्वदारविरहव्यथामतिगरीयसीमन्वभूत् ॥ (२)

निन्देयं तव दुर्नयं चतुरतां किं वा स्तुवीयां विधे
सम्राड् धर्मसुतः सहानुजनिभिर्दैत्यावलीजेतृभिः ।
अत्यल्पाच्छकुनेरवाप सदसि क्लेशं सतां दुर्वचं
राज्यभ्रंशमथाटवीनिवसतिं चाज्ञातचर्यामपि ॥ (३)

इन्द्राद्याशापतिभ्यः पुनरधिगतवान्दुर्लभान्सद्वरान्यो
भैमीं रत्नं सतीनामपि विबुधवरप्रार्थितां तत्कृपातः ।
लेभे यः सोपि राजा विगलितधरणिस्त्यक्तभार्यः कुरूपं
बिभ्रद्वृत्त्यर्थमापद्भृतकसदृशतां तद्विधे त्वं न लंघ्यः ॥ (४)

खलान्दूरे कुर्वन्सुजनसमितौ सन्नहमहो
विधे त्वद्दयामोहात्खलवचनजाले निपतितः ।
गृहक्रीतिद्वारा व्ययमपि धनस्यापमतनुं
शुभोदर्कस्त्वं मे रघुपतिमुखानामिव भवेः ॥ (५)

## लक्ष्मीनक्षत्रमाला

विद्या या चाविद्या याऽपि च विद्याबलेन संवेद्या ।
सद्गुणरत्ननिषद्या सा श्रीर्दद्याददभ्रशुभमाद्या ॥ (१)

वर्णकवर्णवितीर्णस्वर्णां सौवर्णवर्णसमवर्णाम् ।
तूर्णनिगीर्णप्रार्णामर्णवजां वर्णये दयापूर्णाम् ॥ (२)

कमलाङ्कृतवाग्गुम्भां हृतरिपुदम्भामुदग्रकुचकुम्भाम् ।
स्वीकृतहरिपरिरम्भामादृतरम्भाम्भजे शुभारंभाम् ॥ (३)

धन्यां समुद्रकन्याम्प्रतिगृहमान्याम्प्रदत्तधनधान्याम् ।
सेवे परिहृतदैन्यामहनि रजन्याम्मुरारिसौजन्याम् ॥ (४)

गण्यामखिलधरण्यान्निगमवरेण्याम्मनोज्ञलावण्याम् ।
आगोपालशरण्यां सेवे गुण्मां श्रियं सकारुण्याम् ॥ (५)

सत्सन्नुताभिधाना सरसविधाना सरोजदृगधीना ।
अस्तु सुखन्तन्वाना कमला नाना शुचश्च धून्वाना ॥ (६)

विबुधविशेषविनुत्यां विधिसापत्यां वितीर्णसाहित्यां ।
विदधे कमलाम्मत्यां विषयविहृत्यां विमुत्वगां क्षित्याम् ॥ (७)

कमलाङ्कशवलेलाङ्कृतजनजालामुदात्ततमशीलाम् ।
वन्दे वरगुणमालान्नवनवलीलामुपात्तवनमालाम् ॥ (८)

वन्दे पीननितम्बां श्रियमखिलाम्बां वरोष्ठजितबिम्बाम् ।
कचनिर्जितलोलम्बां प्रप्रालम्बाङ्कताच्युतालम्बाम् ॥ (९)

सान्द्रकृपाम्बरवारां स्मेराकारां मनोहराचाराम् ।
अलिकुलनिभकचभारामनिशमुदाराम्भजेऽम्बुजागाराम् ॥ (१०)

पापारण्यलवित्रम्पालितगोत्रम्पवित्ररुचिगात्रम् ।
वन्दे खञ्जननेत्रं विष्णुकलत्रं विचित्रचारित्रम् ॥ (११)

लक्ष्मीं शिशिरसदृशास्याम्भुवनाशास्यां हृतान्तरालस्याम् ।
कलितवचस्सारस्यां हरिकृतदास्यान्दधे मतावस्याम् ॥ (१२)

मञ्जुलचरणद्वितयाङ्कोमलसिचयाम्मनोज्ञकचनिचयाम् ।
विदलितविशेषविशयां वन्दे सदयाम्पयोनिधेस्तनयाम् ॥ (१३)

वन्दे मुकुन्दजायां सुन्दरकायां हृतानतापायाम् ।
अगणितगुणमणिगेयामतुलच्छायामपास्तरिपुमायाम् ॥ (१४)

कमलाङ्कुरोरुकाण्डाङ्कृतजगदण्डाञ्जनावने शौण्डाम् ।
वन्दे मनोज्ञतुण्डां विधुतवितण्डां सशार्ङ्गकोदण्डाम् ॥ (१५)

अद्भुतकनककलापामनतदुरापान्नमामि चिद्रूपाम् ।
नाभीनिर्जितकूपाङ्कृतभयलोपा रमाम्पिकालापाम् ॥ (१६)

आश्रितधवलद्वीपामादृतभूपामपास्तसन्तापाम् ।
पाटितविमताटोपाम्पावनरूपां रमाम्भजे गोपाम् ॥ (१७)

विधुना सोदर्यवतीं विधिना पुष्पेषुणाऽपि पुत्रवतीम् ।
अम्भोधिना पितृमतीमम्भोजदृशा नमामि भर्तृमतीम् ॥ (१८)

नलिनैर्नववेश्मवतीं नाकस्त्रीणाङ्गणेन दासवतीम् ।
त्रय्या स्तुतिपाठवतीं त्रैलोक्येन स्तुमः कुटुम्बवतीम् ॥ (१९)

कारितसर्वाभीष्टां दारितकष्टां दयारसाविष्टाम् ।
स्वरनिर्जितपरपुष्टाम्भक्त्या तुष्टाम्भजे हरेरिष्टाम् ॥ (२०)

सुन्दरमुखारविन्दां रदजितकुन्दां रमां सदानन्दाम् ।
वन्दे वरगुणबृन्दां प्रीतमुकुन्दां दयारसामन्दाम् ॥ (२१)

संहृतसकलायासां चम्पकनासाञ्चराचरावासाम् ।
वन्दे नन्दितदासां समन्दहासां रमाम्महोल्लासाम् ॥ (२२)

निजजनिपूतसमुद्रामवनविनिद्रामदभ्रपामुद्राम् ।
भज रुचिजितहारिद्रां श्रियमुरुभद्राङ्कराप्तवरमुद्राम् ॥ (२३)

पालितविमलस्वान्ताम्मधुरदृगन्ताम्मनोज्ञसीमन्ताम् ।
नाभीजितवेशन्तां नलिननिशान्तां नमामि हरिकान्ताम् ॥(२४)

गजकरजलाभिषिक्तां नन्दितभक्तां रमां दयायुक्ताम् ।
अकृतकवचनैरुक्ताम्मध्ये रिक्तां नमामि हरिसक्ताम् ॥ (२५)

लक्ष्मीङ्कोमलवेषां नतगुरुतोषां नमामि मृदुभाषाम् ।
लोचनजितानिमेषां सुन्दरभूषां सुपर्णरथयोषाम् ॥ (२६)

दासीकृतसुरवामाम्मध्ये क्षामाङ्कचालिषु श्यामाम् ।
आननिर्जितसोमाङ्कृतनतकामां नमामि हरिरामाम् ॥ (२७)

लक्ष्मीतारामालाम्पठितुरबालां श्रियञ्च धारालाम् ।
स्वस्याम्भक्तिमलोलां वचसां विमलां रमा दिशेन्मालां ॥ (२८)

इति श्वेतारण्य नारायणयज्वकृता लक्ष्मीनक्षत्रमाला संपूर्णा

# விக்ஞாபநம்.

எனது வித்யா குருவும், காசியில் பல வருஷகாலம் மஹாதேவாச்ரமி முதலிய பல பெரியவாளிடம் கலைகற்று, பச்சையப்பன் கலாசாலையில் 25 வருஷம் ஸம்ஸ்க்ருதாசார்யராக இருந்து எண்ணிறந்த சிஷ்யர்களுக்கு வித்யாதாநம் செய்து, அளவற்ற வியாக்யாநங்களை எழுதி பிரஸித்திபெற்ற பிரும்மஸ்ரீ அபிநவ வ்யாஸ, ச்வேதாரண்யம் நாராயணயஜ்வா அவர்கள் ஸமீபத்தில் லோகோபகாரமாக சில கிரந்தங்களை வெளியிட்டிருக்கிறார்கள். எல்லோரும் படித்துப் பயன்பெறுமாறு அச்சுச் செலவை மாத்திரம் வஸூலிக்க விலை மதிக்க முடியாத இந்நூல்களுக்கு அற்ப விலை வைக்கப்பட்டிருக்கிறது. இதை வாங்கிப்படித்து எல்லோரும் நன்மையுற வேண்டுகிறேன்.

சொந்த வியாக்யாநத்துடன் விருத்தாலங்கார ரத்நாவளி

| | | | | |
|---|---|---|---|---|
| 1. | ராமஸ்துதி | 0 | 8 | 0 |
| 2. | 30 ஸ்துதிகள் | 0 | 8 | 0 |
| 3. | சிவார்த்தாலங்கார ஸ்தவ | 0 | 6 | 0 |
| 4. | ரத்நாவளி வியாக்யா | 0 | 6 | 0 |
| 5. | பட்டாபிஷேக நாடகம் | 0 | 6 | 0 |
| 6. | ஸூக்தியாதிகள். | 0 | 4 | 0 |

இவ்விலாஸத்தில் கிடைக்கும்:—

வெ. ஸோமதேவ சர்மா
154. தம்புசெட்டி வீதி, சென்னை.

The Progressive Printers, Madras.